# छन्दो वैभवम्

[ द्वितीय सोपानम् ]



प्रणेता

आचार्यः, अयोध्या प्रसाद शास्त्री

उत्तर-प्रदेश संस्कृत अकादमी प्रदत्तेन आर्थिक साहाय्येन प्रकाशितम् ।

# छन्दो वैभवम्

## ( द्वितीय सोपानम् )

प्रणेता :-

**आचार्यः अयोध्या प्रसाद शास्त्री**



प्रकाशिका :-

**इन्दिरा देवी शर्मा**

एम०ए० (संस्कृत-हिन्दी) बी०एड०

प्राप्ति स्थानम् :

**आचार्य - प्रकाशनम्**

**आचार्य कुटीर-सत्यनगर**

**रायबरेली**




ारम्
०
हस्रम्

मूल्यम् रु० २९ मात्रम्

एकोन त्रिशद् रूप्यक मितम्



संवत् २०५० वै०          मार्च १९९३ ई०

# प्रकाशकीयम्

सु विदितमेवैतद् वाङ्मय निष्णातानां संस्कृत मनीषिणाम्, यदद्यावधि प्रकाशितेषु समुपलभ्य मानेषु च छन्दोग्रन्थेषु 'उक्तात्युक्तादि' जाति भाजां वर्ण वृत्तानां समेऽपि संभविनो भेदा नैकत्र क्वचिद् उद्भाविता लक्ष्यन्ते ।

छन्दो वाङ्मये वैकल्प मेतद् अनुमूप ममपित्रा आचार्य प्रवरेण अयोध्या प्रसाद शास्त्रिणा । 'एकाक्षरपाद वृत्तादारभ्य 'अष्टाक्षरपाद' वृत्तं यावत् समेऽपि संभविनः समाख्य वृत्त भेदाः प्रस्तार प्रक्रिय या तत् तत् स्वरूप निर्देशन पुरः सरं तदनुरूपै रुदाहरणै रुपस्कृत्य 'छन्दोवैभवन्' (प्रथम सोपानम्) नाम ग्रन्थे प्राक् प्रकाशिताः ।

इदानीम् 'वृहती जाति भाजः' नवाक्षरपाद बृत्तस्य समेऽपि संभविनः समवृत्त भेदाः ।छन्दोवैभवम्' (द्वितीय सोपानम्) नाम ग्रन्थे प्रकाश्यन्ते ।

एतस्य ग्रन्थस्य प्रकाशने अनेक विध साहाय्य प्रदानेन महान्तमा-मास मनुभवता पितुः परमविधेयेन प्रमुखान्तेवासिना शास्त्रि प्रवरेण श्री द्वारका प्रसाद त्रिपाठिना बहूपकृतम्, तदर्थ मसो ससाधुवादं बहुश धन्यवादार्हः ।

येभ्यो विद्या वयोवृद्ध मनीषिभ्य एतद्ग्रन्थ विषये सम्मायः प्राप्तास्ते सप्रश्रयं सनमस्वं चाभिवन्द्याः ।

तेषाम् अभिवन्द्यतमाः, वृन्दावनस्थ प्राच्य दर्शन महाविद्याल्ये संस्कृत विभागाध्यक्षाः, ब्रजगन्धाख्य संस्कृत त्रैमासिक पत्रिकायाः प्रधान सम्पादक महोदयाः अखिल शास्त्र पारदृश्यानः स्वनाम धन्याः पण्डित-प्रकाण्डाः श्री वासुदेव कृष्ण चतुर्वेदिनः सविशेयम् आदृत्याः ।

ग्रन्थस्यास्य प्रकाशने समुचितं वास्तविकं च मुद्रणव्ययंस्वीकृत्य 'अग्रवाल मुद्रणालयस्य' (अग्रवाल प्रिंटिंग प्रेस) अध्यक्षेण श्री धनीराम श्रेष्ठिना परमसौजन्यम् औदार्यं संस्कृतानुरागित्वं च प्रदर्शितम्, तदर्थमसौ सधन्यवादं शुभाशीर्वचोभिः सु बहुशोऽभिनन्द्यः।

अस्य ग्रन्थस्य प्रकाशनाय 'उत्तर प्रदेश संस्कृत अकादमी, लखनऊ' निदेशक महोदयैः रूप्यक पञ्चसहस्रात्मकम् रु० ५०००/- मात्रम् आर्थिक साहाय्यं प्रदत्तम्, तदर्थं तेषां कृते सधन्यवादं सु बहुशोधन्यवादा वितीर्यन्ते। प्रकाशिते नानेन विदुषां तोषो भविष्यतीतिमन्ये। अत्र ग्रन्थे यत्र क्वापि परिलक्षिता अशुद्धयः सुधीभिः कृपया स्वयं संशोध्याः सूचनीयाश्च।

अन्ते चास्य समीक्षात्मकं निजाभि मतं प्रेषयितुं तत्र भवन्तोऽधिकृता मनीषिणः सानुरोधं मुहुः प्रार्थ्यन्ते।

किं बहुना वचो व्यापारेणेति निवेदयते।

**इन्दिरा देवी शर्मा**

卐 वन्दे ब्रजबसुन्धराम् 卐

# ब्रजगन्धा

[संस्कृत त्रैमासिकी पत्रिका]

प्रधान सम्पादक- डा० वासुदेवकृष्ण चतुर्वेदी

कार्यालय
६६६ गतश्रम टीला,
मथुरा (उ.प्र.) भारत
दूरभाष- ३१६४

दिनांक ३१-३-६३

श्री द्वारकेशो विजयते

परमाह्लादस्याय मवसरो यत् कवि-तार्किक-चक्र चूडामणि मूर्धन्यानां निखिलशास्त्र निष्णातताना मनवद्य - विद्याविद्योतितान्तः करणानां वसुन्धरा वसुभूताभरणानां विद्यार्थि कुल्याजालकीलाल परिषेचिताशेष पत्तनोपवनाना मनवरत सुरभारतीसेवातत्पराणाम्-'एटा' मण्डल मण्डनानाम् 'होडल' पुरवास्तव्यानां श्री डालचन्द्र शर्म वाशिष्ठु-कनिष्ठात्मजानां साम्प्रतं 'रायबरेली' ति विश्रुतस्थलं विभूषणानां नव पिंगलाचार्याणां काव्यकला विलास तत्पराणाम्-

अद्यावधि विद्वद् वर्गो पेक्षितस्य छन्दः शास्त्रस्य विविधोदाहरण प्रकाशन पण्डितानां "छन्दो वैभव" ग्रन्थ रचयितॄणाँ श्रीमदयोध्या प्रसाद शास्त्रिवर्याणां परिश्रममवलोक्य मोमुद्यते चेतः ।

क्वचिद् ग्रन्थारम्भे दीर्घाक्षराणा मावृत्तिर्नितरां पाण्डित्यं प्रकटयति-

यथा- भू भर्ता रामः सीता जानिः,
त्रेतायामासीत् सर्वाध्यक्षः ।
यः साधूँ स्त्रातुं हन्तुं दुष्टान्,
धर्मोद्धारार्थं साक्षाद् विष्णुः ॥

तथा— ह्रस्ताक्षरा वृत्ति रपि—

अघ निकर मपनय
मुद मुप जनय हृदि
प्रणय मम कृतिमथ
दिश वर मपि वरद ॥ पृ० १०४ छन्दो०

अद्यावधिच्छन्दः शास्त्रस्यै तादृशो ग्रन्थो नावलोकितो। विद्यते पुरा श्री रूप गोस्वामिभिः स्वकीये श्रीस्तव कल्पद्रुमे शतणो वृत्तभेदाः श्री कृष्ण भक्तिमभिलक्ष्य प्रकाशिता स्तयैव पण्डितवर्यैः एकष्यैव वृत्तस्य भेदवर्णनेन निःसंशय मधिगतं प्रथमं पदमिति।

अहं सर्वात्मना कविकृते रभिनन्दनं कुर्वन् कामये यदस्य ग्रन्थस्य प्रचुरः प्रचारो भवेत्।

अन्ते—

**पूर्वं श्री पिङ्गलाचार्यैं र्यत्कृतं यच्च गोपितम्।**
**विज्ञायोध्या प्रसादेन पुनस्तद् विशदीकृतम् ॥**
**धन्योऽयोध्या प्रसादोऽयं धन्या चाभिनवाकृतिः।**
**धन्यं प्रकाशनं मन्दे धन्येयं सुरभारती ॥**

**वा० कृ० चतुर्वेदी**

नव्य व्याकरण-पुराण-साहित्य-वल्लभवेदान्त-धर्मशास्त्र सांख्य-योगाचार्यः, ज्योतिषाचार्यः, एम०ए० (हिन्दी-संस्कृत) पी० एच० डी०, डी०लिट्, काव्यतीर्थ, विद्यावारीधिः, साहित्यरत्नादि, संस्कृत विभागाध्यक्षः प्रवाचकश्च।

प्राच्यदर्शन महाविद्यालयस्य, वृन्दावनम्।

# संक्षिप्तः

# प्रणेतृ - परिचयः

'एटा' मण्डल मण्डनं सुविदितं, वाराहतीर्थं महत्
'सोंरों' नाम तदन्तिके श्रुतवतां, ग्रामोऽस्ति 'होडल् पुरम्' ।
तत्रासीद् द्विजराज शेखर मणिः 'श्री लाल चन्द्रः' सुश्रीः,
तस्योदात्तगुणोऽन्वितः प्रतिभया, पुत्रः कनिष्ठोऽभवत् ॥१

पित्रोर्यविष्ठ पुमपत्यतयाभिजातः,
प्रीतिं नितान्त मुचिताभ्यधिकामवाप्तः ।
मेधा गुणाङ्क कलनाध्ययन प्रसक्तो,
दूरं व्यगाढ़ स हि संस्कृत वाङ्मयाब्धिम् ॥२

आचार्यो यः, सुरनर गिरां, संस्तुतो धीं धनाढयो,
वाशिष्ठः सत् कविषु गणितो, विप्रबर्यः 'सनाढ्यः' ।
वैदुष्येणाप्रतिम सुधिया, विद्वदग्रे गणेयो,
धन्यो वाग्मी, विनय विभवः, कर्मकाण्ड प्रवीणः ॥३

विष्वक् ख्यातो, विमल चरितः शिष्य सम्बोधनेच्छुः,
प्रेम्णा नाम्ना गुरुभिरुदितः 'शास्त्ययोध्या प्रसादः' ।
वृत्त्या सोऽयं चिरमधिवसन् 'राय' पूर्वां 'बरेली',
प्रीत्या पुत्रानिव सुमनसा ध्यापिपच्छात्रबर्गान् ॥४

छन्दो वैभव मातेने,
तेनेदं वाक् प्रसादतः ।
भक्त्या समर्पितं तस्यै,
स्मृता सा संप्रसीदतु ॥



प्रणेता– आचार्यः अयोध्या प्रसाद शास्त्री
एम० ए०
व्याकरण-साहित्याचार्यः, साहित्य रत्नम्

## श्रीः

### किंचित् प्रास्ताविकम्

छन्दो विज्ञानं हि काव्याब्धि तितीर्षावतां मनीषिणां नौरिव परमोपयोगि साधनम् । तथा हि–

पद्यं लक्षयता महाकविना दण्डिना

"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।" इत्युपक्रम्य

"छन्दो-विचित्यां सकल स्तत् प्रपञ्चो निदर्शितः ।

सा विद्या नौ स्तितीर्षूणां गम्भीरं काव्य सागरम् ॥ इति

व्याहृरता छन्दः परिज्ञानं कवीनाम् अपरिहार्यं साधनमिति सिद्धन्तितम् ।

इत्येतमेव भाव मभिसंधाय, साम्प्रतं समुपलभ्यमानेषु च्छन्दो–ग्रन्थेषु कवि-कुल कलितानाम् 'उक्तात्युक्तादि समाख्यानाँ वृत्तानां समेषामपि संभविनां भेदानां सामस्त्येन क्वाप्येकत्र अनुपलम्भाद् मया एकाक्षर–पादवृत्तादारभ्य अष्टाक्षरपादवृतं यावत् क्रमशः 'उक्ता त्युक्तामध्या प्रतिष्ठा–सुप्रतिष्ठा गायत्र्युष्णिगनुष्टु बा रव्यानां वृत्तानां यथामति समेपि समबृत्तभदाः गुरु लघु (ऽ।) संकेतैः तत् तत् स्वरूप प्रदर्शन पुरः सरम् स्वरचितैरुदाहरणैः निरूपिताः ।

ते च प्रकाशिते 'छन्दो वैभनम्' इत्यारव्ये ग्रन्थे प्रथमसोपान रूपेण प्रदर्शिताः ।

एतर्हि सारस्वत प्रसादेन समुप जातोत्साहेन 'नवाक्षर पादवृत्तस्य वृहती' जातिभाजः समेऽपि संभविनः समवृत्त भेदाः गुरु लघु ऽ। चिह्नैः तत् तत् स्वरूप निर्देशन पूर्वकं स्वरचितैः रुदा हरणै रुपन्यस्य 'छन्दो वैभवम्' नाम ग्रन्थस्य द्वितीय सोपन रूपेण तद् विदां पुरः समुपस्थाप्यन्ते ।

एषां लक्षणानि तु गुरु लघु संकेतैः स्वरूप प्रदर्शनादेव स्वयं सिद्धानि । प्रति भेदं नामकरणं तु व्यवहारापेक्षम् ।

'व्यवहारार्थं हि संज्ञाकरण मिति' संख्यावता मन्वाख्यानम् । तथा च संस्मर्यते–

"नाम रूपात्मकं विश्वं यदिदं दृश्यते द्विधा ।

तत्राद्यस्य कविर्वेधा द्वितीयस्य चतुर्मुखः ॥" इति

एतेन नामकरणं कविकुल निघ्नमेवेति साध्यते । तत्तु यथा-व्यवहारं समय सापेक्षम् ।

विद्वत् समाजे याव देषां व्यवहारो न बहुलतां लभते तावत् तत् तद् वृत्त भेद संख्ययैव व्यवहारो निर्वहणीयः ।

अत्रापि प्रायो रामभक्ति प्रतिपादका भावाः समाश्रिताः । यत्र तत्र वैराग्याध्यात्मिक भावाः, नीति विषयकाः सामयिकाश्च भावा निबद्धाः ।

यद्यप्यत्र काव्य रसिकैः, पाद पूर्ति मात्र प्रयोजनके पद गुम्फने तथाविधः काव्य रसास्वादो न स्वापः तथापि

"रतिर्देवादिविषया....... .................. । भावः"..............

इत्याचार्यमम्मटभट्टोक्तदिशा भावानुभूतिस्तु सचेतसां न दुरवापा स्यादिति मन्ये ।

अत्रग्रन्थे यत्र तत्र भावानां पदानां वा पुनः पुनरुपादानम् परस्पर निरपेक्षतया प्रतिवृत्तं स्वस्मिन्नेव स्वातन्त्र्येण स्वाभिधेय विश्रमाद् न दोषलेशमपि उद्भावयितु मलमिति न तद् विदा मगोचरम् ।

समानां सृतिमाश्रित्य धारा प्रवाहेण प्रणेय पद्यापेक्षया प्रतिभेदं विभिन्नां गुरु लघु सरणिमनुसृत्य पद गुम्फनैः वृत्त पूर्तौ कियान्भूयान् बोद्ध आमासो भवतीति तज्ज्ञ मात्र संवेद्याम् ।

अस्मिन्नुपक्रमे परिश्रमो में कियदवधिसार्थंइति महीयांसो विद्वांस एव निर्णेष्यन्ते ।

आशास्यते यदेतादृश प्रणयनैः प्रेरणा मवाप्य समय-साधनसम्पन्नाः प्रतिभाजुषः 'पङ्क्ति प्रभृतीनामपि वृत्तानां समान् संभविनो भेदान् निरूपयितुं बद्ध परिकरा भविष्यन्ति, सारस्वत कोशं च संवर्धयिष्यन्ति ।

विशेष प्रतिपत्तये जिज्ञासुभिः प्रथम सोपाने 'प्राक्कथनम्' परिशिष्टं च विलोकनीयम् ।

यद्येतेन प्रकरणेन मनीषिणां मनागपि तोषो भविष्यति तत आत्म परिश्रमं सफलं मंस्ये ।

कृत धियोऽस्य समुचितं मूलाङ्कनं विदध्युरिति प्रार्थयते—

विद्वद् विधेयः,

**अयोध्या प्रसाद शास्त्री**

॥ श्रीः ॥

# छन्दो-वैभवम्

## [ द्वितीय सोपानम् ]

सिद्धि कामा, दधति नितरां, मानवानां सदैव,

दोषाः सर्वे, सपदि विलयं, यान्ति, यस्याभिधानात् ।

पूतात्मानः, सततयमिनः, प्राणिनः संभवन्ति,

प्रेयः श्रेयो, वितरतु हृदि, ध्यात मात्रः स शम्भुः ॥ १

नीलाम्भोजाभिरामं, वपुरति ललितं, बिभ्रदोजोनिधानं,

पीतं वासो वसानः, सरसिजनयनो, रूप लावण्य राशिः ।

नित्यानन्द स्वभावः सुकृतिभिरनिशं, लोचनैः पीयमानो,

मोदं दिश्यात् मुकुन्दः, प्रमुदित वदनो, 'लाकृति' वंश पाणिः २

'रामाङ्क' भव बन्ध मुक्ति निपुणं, भक्ति प्रदं शर्मदं,

लोके वृत्त विधान बोधनपरं सन्मार्ग सन्देशकम् ।

अन्तः शान्ति समाहितं सुमनसां, सद्यः प्रमोदावहं,

'छन्दो वैभव' मेतदस्तु सुधियां, निःश्रेयसायानिशम् ॥ ३

--★--

अथ **बृहती** भेदाः स्वरूप निरूपणपुरःसरं सोदाहरणा निर्दिश्यन्ते:-

१ SSSSSSSSS

भू भर्ता रामः सीता जानिः,
त्रेताया मासीत् सर्वाध्यक्षः ।।
यः साधूँस्त्रातुं हन्तुं दुष्टान्,
धर्मोद्धारार्थं साक्षाद् विष्णुः ।।

२ ।SSSSSSSS

प्रियार्थं मातु स्ताताादिष्टो,
जटाभिर्वल्कै मौँनाचारः ।
समेतो बध्वा सीतानाथः,
स सौमित्रिर्यो यातोऽरण्यम् ।।

३ S।SSSSSSS

वर्तयन् वन्यैः कन्दैः मूलैः,
आचचारोग्रं कृच्छ्रं मौनम् ।।
तापसान् पश्यन् भक्ति प्रह्वः,
निर्भयाँश्चक्रे सर्वापद्भ्यः ।।

४ ।।SSSSSSS

मुनिभिः सङ्गं कुर्वन् धीमान्,
व्यपदिश्याभी रक्षोनाशम् ।
उपदिष्टस्तै र्वासं चक्रे,
सह सौमित्रिः सीतानाथः ।।

५ SS।SSSSSS

रक्षांसि हन्तुं सन्धां चक्रे,
त्रातुं मुनीशान् दैत्येभ्यः सः ।
निर्माप्य शालां पर्णैं र्भ्रात्रा,
सीता समेतो ऽरण्ये ऽवात्सीत् ।।

६ ISISSSSSS

ततो मुनीनां रक्षा व्याजाद्,
वनाद् वनं रामो बभ्राम ।
ततः खराधिष्ठानं प्राप्तो,
जघान दैत्यान् मायाचारान् ।।

७ SIISSSSSS

दण्डक नामारण्यानीं स,
प्राप्य निकेतं पर्णैः कृत्वा ।
सानुज सीतो वासं चक्रे,
साधु सुरक्षां कुर्वन् रामः ।।

८ IIISSSSSS

निहतवान् सोऽनेकान् दैत्यान्,
कपट रूपान् भीमाचारान् ।
अथ कदाचिद् नारीं कांचिद्,
मनसिजार्तां तत्रापश्यत् ।।

९ SSSISSSSS

लङ्केश स्वसा स्वेच्छा रूपा,
शूर्पाङ्काभिधाना विख्याता, ।
श्री रामं स्मरात् तत्रोपेता,
संचुक्रोध तत्प्रत्याख्याता ।।

१० ISSISSSSS

विदेहात्मजां निर्लज्जा सा,
अभिद्रुत्य चक्रे सातङ्काम् ।
निजग्राह सद्यस्तां धूर्तां,
स्थितिं पालयन् सौमित्रिः सः ।।

११ SISISSSSS

सा खरालयं गत्वाह्लाय,
संप्रदर्श्य तां स्वीयावस्थाम् ।
राघवे समारोप्यागस्तद्,
दुर्विलप्य तारं चुक्रोश, ॥

१२ IISISSSSS

अनुगैः प्रभूतै रक्षोभिः,
सह दूषणेन त्रिमूर्ध्ना ।
अभियोद्धु मुत्सिक्तोऽधावत्,
सजवः खरः सीतानाथम् ॥

१३ SSIISSSSS

लून श्रवसं तां निर्नासां,
कृत्वा पुरतो निर्जग्मुस्ते ।
भाव्यं त्वशिवं तेषां नूनं,
संसूचित मेवं दिष्टेन ॥

१४ ISIISSSSS

रणे निजघानैको रामः,
खरं सह सर्वै रक्षोभिः ।
चकार जनस्थानं पूतं,
तपः प्रभवं धर्मारण्यम् ॥

१५ SIIISSSSS

शूर्पणखया गत्वा लङ्कां,
रावण सभायां माख्यातः ।
तत्र विहितः श्री रामेण,
सानुग खरादे विध्वंसः ॥

१६ IIIISSSSS

तदनुज दुष्कृत्यं धार्ष्ट्याात्,
स्वमुख विकारं स्माख्याय ।
कपट पटुः सा निर्लज्ला,
निवपति वीजं वैरस्य ॥

१७ SSSSISSSS

रक्षो नाशाय सा लङ्केशं,
दर्पोन्मत्तं महाहंकारम् ।
सव्याजं प्रैरिरद् विद्रोग्धुं,
रामायारण्य संवासाय ॥

१८ ISSSISSSS

सहायं मायिनं मारीचं,
विधायायाज्जनस्थानं सः ।
परेशं वञ्चयित्वा रामं,
स्वनाशायैव सीतां जह्रे ॥

१९ SISSISSSS

मार्गं माणो वने रामस्तां,
सानुजः प्राप पम्पा तीरम् ।
तत्र वातात्मजेना ख्यातः,
सख्य मानर्च्छ सुग्रीवेण ॥

२० IISSISSSS

इषुणै केन निर्मर्यादं,
हतवान् वालिनं श्रीरामः ।
कपि राज्ये दधे सुग्रीवं,
प्रयतं मार्गितुं तां सीताम् ॥

२१ SSISISSSS

प्रीतो हरीश्वरः सुग्रीवो,
रामप्रिया मदोषां सीताम् ।
सर्वा दिशो हरी नन्वेष्टुं,
सर्वत्र प्रेषयामासासौ ॥

२२ ISISISSSS

अगस्त्य सेविता माशां तु,
वृतोऽङ्गदादिभिस्तैर्वीरैः ।
जगाम वात सूनु र्धीमान्,
कपीश प्रेषितः साभिज्ञः ॥

२३ SIISISSSS

अङ्गद नायकत्वे सर्वे,
वानर यूथपाः संतुष्टाः ॥
दुर्गम मार्ग नाना क्लेशान्,
प्राप्य समुद्रतीरं जग्मुः ॥

२४ IIISISSSS

अरुण सूनु संदिष्टास्ते,
जलधि लङ्घने संदिग्धाः ।
पवन पुत्र विक्रान्तेन,
विगत संज्वराः सम्पन्नाः ॥

२५ SSSIISSSS

शौर्येणातुल बुद्धया दूरं,
प्रत्यूहानखिलान् विद्राव्य ।
वज्राङ्गो जलधिं प्रोल्लङ्घ्य,
लङ्का दुर्ग मथ प्राविक्षत् ॥

२६ ISSIISSSS

विशन्तं कपिवीरं लङ्कां,
पुरस्तस्य पुरोऽधिष्ठात्री ।
अतिष्ठत् सहसा तं रोद्धुं,
विनम्रा तदति क्रान्ताभूत् ।।

२७ S.SIISSSS

जानकीं परितोन्वेष्टुं स,
रक्षसां निलयान भ्राम्यत् ।
रावणस्य गतः प्रासादान्,
दृष्टवान् न हि देवीं क्वापि ।।

२८ IISIISSSS

चतुरङ्गुल मात्रा क्वापि,
क्षिति रस्य न शिष्टा दृष्टा ।
स जगाम तदा निर्वेदं,
बहुशो ऽस्मरदिष्टान् देवान् ।।

२९ SSIIISSSS

सो ऽशोक वनिका मायातो,
घृष्णा क्षरतया वैदेहीम् ।
आलोकयत पुण्यैः पूर्वैः,
मेने मनसि पुण्यात्मानम् ।।

३० ISIIISSSS

पतिव्रत परां दीनां तां,
निशाचर गृहे संरुद्धाम् ।
विदेह तनयां संविग्नाम्,
अबोधि विविधैश्चिह्नैः सः ।।

३१ SIIIISSSS

तत्र समुपयातः स्वैरं,
मैथिल तनया सान्निध्यम् ।
रात्रिचर पतिः स्वस्त्रीभिः,
लोभयितु मनेकोपायैः ॥

३२ IIIIISSSS

अवनि तनया मालोक्य,
चरण पतित स्तां स्माह ।
मम शयन मारोह त्वं,
सपदि भज सर्वैश्यर्यम् ॥

३३ SSSSSISSS

तच्छ्रुत्वा धिक् कुर्वती सीता,
कोपाविष्टा प्राह लङ्केशम् ।
नीच त्वं सूच्या प्रमाक्ष्यंक्षि,
जिह्वाग्रेणाथ क्षुरं लेक्षि ॥

३४ ISSSSISSS

अनन्याहं रामभद्रेण,
यथास्ते शश्वत् प्रभार्केण ।
इयं बुद्धिस्ते बधार्थाय,
यतो मामाप्तुं चुराचारः ॥

३५ SISSSISSS

दुर्वचो यत् प्रोक्त वान् नीच,
दुर्मतेत्यन्तं सुनिर्लज्ज ।
त्वद् विना व्याहर्तु मिच्छेत् को,
यो नहि स्यात् त्यक्त मर्यादः ॥

३६ ।।SSS।SSS

सपदि त्वां कुत्सिताचार,
तपसा कुर्यामहं भस्म ।
विधिना तेऽयं बधोपायो,
विहितो ह्यस्मिन् न सन्देहः ।

३७ SS।SS।SSS

श्रद्धा चिरं जीवितुं ते चेद्,
आशु प्रपद्यस्व तं रामम् ।
निर्यातय त्वं च मां तस्मै,
संभाव्य मेवं हि ते स्वस्ति ।

३८ ।S।SS।SSS

निरादृतः सीतया कोपाद्,
निशाचरेशः प्रजज्वाल ।
कृपाणमुद्धृत्य हन्तुं तां,
प्रचक्रमे वारितः स्त्रीभिः ।।

३९ S।।SS।SSS

मद्वशगा माशु वैदेहीं,
कर्तुं मुपायै रनेकैस्तु ।
वर्तयतात्राखिला यूथं,
निर्गत आदिश्य लङ्केशः ।।

४० ।।।SS।SSS

जनक पुत्रीं ततः सर्वाः,
परित आवार्य संत्रास्य ।
निजगदुस्ता वशं गन्तुं,
सपदि पौलस्त्यवर्यस्य ।।

४१ SSSISISSS

सीता प्राह तर्जयन्तीस्ताः,
छिन्ना वा प्रदीपिता वह्नौ ।
पादेनापि जातु सव्येन,
याप्यं तं नहि स्पृशेयं तु ॥

४२ ISSISISSS

ततस्ता निशाचरीः सर्वा,
उदाराशया व्रवीत् काचित् ।
अनार्या अपेत ध्वंसध्वं,
खलूक्तवेदृशं वचः सीताम् ॥

४३ SISISISSS

राघवो गजेन्द्र मास्थाय,
रावणं निहत्य संग्रामे ।
सीतया समं पुरीं प्राप्तः,
स्वप्न एवमद्य संदृष्टः ॥

४४ IISISISSS

त्रिजटा वचो निशम्याथ,
निखिला भयाकुलाः सर्वाः ।
सुषुपुस्ततोऽन्यतो गत्वा,
हनुमान् व्यलोकयत् सर्वम् ॥

४५ SSIISISSS

सीताशरणाथ संविग्ना,
बाला विललाप कन्येव ।
आशास्त च जीवितस्यान्तं,
रामं हृदि संस्मरन्ती सा ।

४६ ISIISISSS

विहाय तु जीविते श्रद्धां,
गलस्य निपीडनं वेण्या ।
इयेष विधातु मत्यार्ता,
समादित शाखिकामारात् ॥

४७ SIIISISSS

मारुति रवेक्ष्य तत् सर्वं,
मैथिल सुता मुपश्राव्य ।
भास्कर कुलं स्तुवन् युक्त्या,
रामचरितं जगौ धीमान् ॥

४८ IIIISISSS

जनकसुता समाकर्ण्य,
रघुपति वृत्त मामूलम् ।
प्रिय वचनं य आचष्टे,
स मम पुरो भवत्वाह ॥

४९ SSSSIISSS

त्रस्तां सीतामथ संभाव्य,
सद्यस्तां सान्त्वयितुं धीरः ।
संक्षिप्य स्वं शनकैर्देहम्,
मूर्ध्ना चानम्य पुरस्तस्थौ ॥

५० ISSSIISSS

अहं दासो रघुवीरस्य,
तदादेशात् तव हे देवि ।
प्रवृत्तिं ज्ञातु मिह प्राप्तः,
शुचालं त्वं भव निर्भीका ॥

५१ SISSIISSS

प्रत्ययार्थं तव हे मातः,
प्रेषितं तेन मयानीतम् ।
अङ्गुलीयं प्रमनाः पश्य,
क्षीण दुःखा भव गच्छ स्वाम् ।।

५२ IISSIISSS

प्रिय नामाङ्कित मुद्रां ता,
मवलोक्य परमप्रीता ।
कुशलं सानुज रामस्य,
परिपप्रच्छ कपिं सीता ।।

५३ SSISIISSS

वातात्मजः क्रमशः सर्वं,
सुग्रीव संगत माचख्यौ ।
आस्ते समं कपि राजेन,
सस्वानुजः कुशली रामः ।।

५४ ISISIISSS

ततः कपि र्बहुधाश्वास्य,
रघूत्तमप्रियपत्नीं ताम् ।
उवाच मे प्रतिसंदेशं,
प्रयच्छ वाञ्छसि यद् वक्तुम् ।।

५५ SIISIISSS

साह निवेदय तत्सर्वं,
स्वामिनि वत्स यथादृष्टम् ।
माँ स समुद्धरतु क्लेशात्,
पामर रावण मुत्साद्य ।।

५६ IIISIISSS

पवन पुत्र उवाचैनां,
जननि चेतय दुःखान्तम् ।
तव परिस्थिति माकर्ण्य,
द्रुत मिहैष्यति लोकेशः ॥

५७ SSSIIISSS

अद्धाक्रम्य नगरीं लङ्कां,
विध्वस्याशरजनेशानम् ।
सामात्यं सगणमत्युग्रं,
स त्वां नेष्यति पुरीं स्वीयाम् ॥

५८ ISSIIISSS

इदानीं तदनुजानीहि,
प्रयातुं प्रतिप्रभुं रामम् ।
प्रदद्या निज मभिज्ञानम्,
यथा सोपि मयि श्रद्दध्यात् ॥

५९ SISIIISSS

जानकी निज शिरो रत्नं,
प्राददात् पवन पुत्रस्य ।
सादरं स तदुपादाय,
स्वामिनं प्रति मनश्चक्रे ॥

६० IISIIISSS

अथ रावण बलं ज्ञातुं,
तदशोक वनिकां रम्याम् ।
अभनक् स हि कपि श्रेष्ठो,
न्यबधीच्च शतशः पालान् ॥

६१ SSIIIISSS

श्रुत्वा रजनिचराधीशः,
शाखा मृगवर भग्नां ताम् ।
सद्यो निजतनयं रोषाद्,
रोधाय प्रहितवानक्षम् ॥

६२ ISIIIISSS

बलौघ सहित मायातं,
निहत्य स कपि वीर स्तम् ।
भयं हृदि जनयामास,
भृशं निशिचर नाथस्य ॥

६३ SIIIIISSS

अक्ष निहनन माकर्ण्य,
शक्रजित मपरं सूनुम् ।
पैरिरदनिल जातस्य,
निग्रह मुचित माधातुम् ॥

६४ IIIIIISSS

बहुविध बल संवीतो,
निरगमदभियोद्धुं सः ।
कपिरपि तमभिज्ञाय,
प्रमद मुपगतो वीरः ॥

६५ SSSSSSISS

घोरं जन्यं तत्राजनिष्ट,
मोदं प्राप्तौ तौ युध्यमानौ ।
जेतुं शक्तो नाभूत्कथं चित्,
वृत्रघ्नो जेता मारुतितम् ॥

६६ ISSSSSISS

कपीन्द्रं बन्द्धुं मेघनादः,
ततः प्रायुङ्क्त ब्राह्ममस्त्रम् ।
हरिं ब्रह्माणं मानयन् स,
स्वयं वन्धं स्वस्यानुकेने ॥

६७ SISSSSISS

इत्थ मालापो रावणेन,
स्यान्ममानायासेन सद्यः ।
तद् वलं चाकूतं विदित्वा,
यामि चित्ते दध्रे स भावम् ॥

६८ IISSSSISS

स तथा बद्धो रावणस्य,
पुरतो निन्ये शक्र जेत्रा ।
परि पृष्टः स्वं रामदासं,
सचिवं सुग्रीवस्य चख्यौ ॥

६९ SSISSSISS

सुग्रीव संदेशं ततः स,
प्रोवाच पथ्यं विस्तरेण ।
वाञ्छन् हितं सीतां जहीहि,
रामोऽन्यथा कुर्याद् विनाशम् ।

७० ISISSSISS

निशम्य सद्यो रावणस्तत्,
कपे बंधार्थं मादिदेश ।
विभीषण स्तन्नानुमेने,
ह्यबध्यतां दूतस्य प्रोच्य ॥

७१ SIISSSISS

निग्रहमन्यं तस्य कर्तुं,
सोऽन्वनयज् ज्येष्ठं विनीतः ।
राक्षस राज श्चिन्तयित्वा,
प्राह कपे र्लाङ्गूल दाहम् ॥

७२ IIISSSISS

निशिचराधीशेन दिष्टाः,
हनुमतः पुच्छं विवृद्धम् ।
वसन वल्कै र्वेष्ट यित्वा,
हुतवहेनादीपयन्त ॥

७३ SSSISSISS

पाशाद् धातु राशीः प्रभावाद्,
आत्मानं हरि र्मोचयित्वा ।
लाङ्गूलाग्निना सर्वलङ्कां,
चक्रे भस्मसात् तां क्षणेन ॥

७४ ISSISSISS

ततः पुच्छवह्निं प्रदीप्तं,
समुद्रे प्रशान्तं विधाय ।
पुन र्जानकीमक्षतां तां,
विलोक्य स भक्त्या ननाम ॥

७५ SISISSISS

स्वामिनं ततः संप्रयातुं,
मातरं ययाचे तदाज्ञाम् ।
सा तु मोदमानानुमेने,
ह्युत्पपात वीरः क्षणात् खम् ॥

७६ IISISSISS

अथ ऋष्यमूकाचलस्थं,
समुपेत्य रामं विनम्रः ।
कुशलं समाचष्ट देव्या,
अधिलङ्कं वासं च तस्याः ॥

७७ SSIISSISS

रामस्तु निशम्य प्रवृत्तिं,
वातात्मज नीतां प्रियायाः ।
उद्योग मथाह्नाय कर्तुं,
सुग्रीव मुपायुङ्क्त तत्र ।

७८ ISIISSISS

ततोधिधरं सर्वदिक्षु,
स्थितान् हरिऋक्ष प्रवीरान् ।
समाचकलद् वानरेशो,
दिदेश च लङ्कां प्रयातुम् ॥

७९ SIIISSISS

वानर भटैर्ऋक्ष वीरैः,
सार्धं मभि शत्रुं प्रयातुम् ।
उद्यम मथारब्ध रामो,
लक्ष्मण कपीशानुयातः ॥

८० IIIISSISS

हरि वरवीराः सहोत्साहाः,
परिहरमाणा विमर्दम् ।
अवनितले व्योम्नि गन्तुं,
प्रवर्तिरे योद्धुकामाः ॥

८१ SSSSISISS

पारावारस्य तीर माप्ता,
सुग्रीवाधिष्ठिता चमूः सा ।
अब्धेः पारं प्रयातुकामः,
श्रीराम श्चिन्तयां बभूव ॥

८२ ISSSISISS

दिनानि त्रीणि सं प्रतीक्ष्य,
सुपन्थानं ततो ऽनवाप्य ।
भृशं तस्मै चुकोप रामः,
सरोपं चाप माततान ॥

८३ SISSISISS

राघवं तादृशं विलोक्य,
भीत भीतः प्रकम्पमानः ।
दर्शयामास सागरः स्वं,
मानुषं विग्रहं विनीतः ॥

८४ IISSISISS

प्रणिपत्याह राघवेन्द्रम्,
उपयाच्य क्षमां समुद्रः ।
शनकै रन्तरैत् प्रसन्नः,
उपयुक्तं ततो विधातुम् ॥

८५ SSISISISS

शिल्पी नलः प्रभोर्मतेन,
सेतुं महोदधौ चकार ।
तेनैव सर्व सैन्य युक्तः,
पारं परं पराप रामः ॥

८६ SISISISSS

विभीषणोऽथ राक्षसेशं,
प्रबोधयन्नयं नयं च ।
द्रुतं विहातु मार्यपत्नीं,
निरादृतः पराप रामम् ॥

८७ SIISISISS

तं शरणागतं विचार्य,
श्री रघुनन्दनः सहर्षम् ।
अन्तिक मानिनाय सद्यो,
राक्षसराज माजुहाव ॥

८८ IIISISISS

तदनु नीतिमान् स रामः,
शमयितुं निशाचरेन्द्रम् ।
प्रविजिघाय वालि सूनुं,
प्रति विबोधयन्नुदर्कम् ॥

८९ SSSIISISS

आदिष्टः स समेत्य लङ्कां,
लङ्केशं बहुधान्वशास्त ।
दिष्टादाग्रह मत्यजन्तं,
निर्भीको निरभर्त्सयच्च ॥

९० ISSIISISS

प्रसह्याशु वलं विधूय,
प्रवीरः प्रभु माजगाम ।
विदित्वारि मतं च रामः,
समित्यै विवशो बभूव ॥

६१ SISIISISS

दारुणोऽथ रणो रयेण,
सेनयो रुभयोः प्रवृत्तः ।
आसुरं बलमाशु नष्टं,
वीक्ष्य रावण आचुकोप ॥

६२ IISIISISS

अनुजं स हि दीर्घनिद्रं,
परिबोधितवानकाले ।
विदितार्थतया नियुध्य,
मृतिमाप स कुम्भकर्णः ॥

६३ SSIIISISS

श्रुत्वा तमथ जग्मिवांसं,
वीरं सपदि दीर्घ निद्राम् ।
योद्धुं रिपुबलेन सार्धं,
ज्येष्ठं तनय माजुहाव ॥

६४ ISIIISISS

जगाम समराय मायी,
बलेन सह मेघनादः ।
चिरं निजबलं प्रकाश्य,
अघानि युधि लक्ष्मणेन ॥

६५ SIIIISISS

तं समर हतं निशम्य,
क्षोभ मुपगतः स पापः ।
स्यन्दन मुपरुह्य हैमं,
योद्धु मभिमुखं प्रयातः ॥

९६ IIIIISISS

सुर परिधृढ प्रदत्तं,
स रथ मुपलभ्य सद्यः ।
रघुपति रथाभियोद्धुं,
रिपु बल मुपाजगाम ॥

९७ SSSSSIISS

अन्योन्यं शस्त्रैः प्रतिशस्त्रैः,
घोरः संग्रामोऽथ प्रवृत्तः ।
आसीन् मायावी दशकण्ठः,
रामो माया जित्वर एकः ॥

९८ ISSSSIISS

ततो रामो राक्षस माया,
निरस्य क्षिप्रं स्वगुणेन ।
जघान ब्रह्मास्त्र बलेन,
महा पापं तं दनुजेशम् ॥

९९ SISSSIISS

पञ्चतां गते त्रिदशारौ,
स्वस्थतां लोकः समवाप ।
राघवो मूर्तां जयलक्ष्मीं,
प्राप्य सीतां मोदमियाय ॥

१०० IISSSIISS

अथ लङ्कायामभिषिच्य,
दशकण्ठस्यानुज मेव ।
सह सीता लक्ष्मण मित्रैः,
नगरीं स्वां गन्तुं मियेष ॥

१०१ SSISSIISS

कौबेर मारुह्य विमानं,
सर्वैः सुहृद्भिः परिवीतः ।
तत् तत् प्रियायै पथि रामः,
संदर्शयन् स्वां पुरमाप ॥

१०२ ISISSIISS

तदागमारूढ प्रमोदाः,
समेऽपि पौराः समभीयुः ।
सहानुजो मातृभिराशु,
गुरुं पुरस्कृत्य विनीतः ॥ युग्मम्

प्रति प्रदातुं गुरवे तु,
विशाल राज्यं भरतोऽपि ।
समन्त्रि सैन्यः सहपौरैः,
समेत्य प्रत्युद्गतवाँस्तम् ॥

१०३ SIISSIISS

तीर्थ जलै र्मन्त्र पूतै,
स्तं तु ससीतं कुल पूज्यः ।
शास्त्र विधानेन वशिष्ठः
पैतृक राज्येभिषिषेच ॥

१०४ IIISSIISS

त्रिभुवनं मोद भरेण,
सह जडै श्चेतन सार्थैः ।
सम चकाच् शासति रामे,
प्रति दिशं मङ्गल मासीत् ॥

१०५ SSSISIISS

सर्वान् ऋक्ष वानर वीरान्,
वासो भूषणैः परितोष्य ।
आवासं निजं प्रति गन्तुं,
सस्नेहादरं विससर्ज ॥

१०६ ISSISIISS

हनूमन्त माग्रह वन्तं,
स्व पार्श्वेऽन्वमंस्त निवस्तुम् ।
स्मरंस्तस्य तानुपकारान्,
अशक्तो ऽन्यथा प्रति कर्तुम् ।

१०७ SISISIISS

लोक रक्षणे धृत दीक्षं,
गौरवात् सभाजयितुं तु ।
ते महर्षयोऽखिलवन्द्या,
अभ्युपेत्य तं प्रशशंसुः ॥

१०८ IISISIISS

प्राणिहत्य तं दनुजेन्द्रं,
भुवन त्रयं हृत पीडम् ।
विहितं हरेऽनुकम्पिन्,
जयतादहो अभिराम ॥

१०९ SSIISIISS

रामाचरितामृषयस्ते,
पूजा मुपगृह्य समर्घ्याः ।
द्यामुत्पतिता मुदमाप्ता,
ध्यात्वा हृदि तद् गुण गाथाः ॥

११० ISIISIISS

भुवं परि शासति रामे,
जना मुदिता गत रोगाः ।
मही धन धान्य समृद्धा,
जगन्निरुपद्रव मासीत् ॥

१११ SIIISIISS

पुत्र मरणं नहि तत्र,
भर्तृ रहिता न च नारी ।
श्वापद कुलं गत वैरं,
सर्वमभवच्छुभ शंसि ॥

११२ IIIISIISS

प्रभवति कोऽपि न वक्तुं,
रघुपति राज्य विशेषम् ।
जनक सुता समुपेतो,
विलसति यत्र महीशः ॥

११३ SSSSIIISS

पौलस्त्याराम कृतवासां,
सीतां प्रीत्या श्रयति रामः ।
साक्षेपोक्ति जन विरूढां,
श्रुत्वात्यन्तं स विषसाद ॥

११४ ISSSIIISS

स लोकाराधन निमित्तं,
प्रिया त्यागं मनसि दध्यौ ।
वने त्यक्तुं जनक पुत्रीं,
सव्याजं लक्ष्मण माचष्ट ॥

११५ SISSIIISS

स्वर्धुनी तीर मनु सीता,
माशु प्रापय्य सुरथेन ।
एक एव त्व मुपसीद,
सा तु तत्रैव निवसेद् हा !!

११६ IISSIIISS

अनुशिष्टः सपदि सीतां,
रथ मारोप्य स विनीतः ।
उपकूलं त्रिदश नद्याः,
परिहाय प्रति निवृत्तः ॥

११७ SSISIIISS

सीताथ शोक परितप्ता,
भागीरथी मवजगाहे ।
गङ्गा धराभ्युप गृहीता,
वाल्मीकि पार्श्व मुपपेदे ॥

११८ ISISIIISS

विदेहजा प्रसव काले,
शिशू असूत यम जातौ ।
तयो रशेष मनिवार्यम्,
ऋषि श्चकार जनिकर्म ॥

११९ SIISIIISS

तत्र चकार 'कुश' संज्ञा,
मग्रभवस्य तनयस्य ।
अध्यपरस्य 'लव' नाम,
ब्रह्म ऋषिस्तु सुविचार्य ॥

१२० IIISIIISS

जगृहतु ऋंषिवरात् ता–
वखिल शास्त्र–रण विद्याः ।
जगति चा प्रतिम वीरौ,
कुशलवा वजनिषाताम् ॥

१२१ SSSIIIISS

श्रीरामस्तु जन प्रवादा–
ल्लोकाराधनमभि लक्ष्य ।
वैदेही मपि परिहाय,
दूनोऽभून् मनसि नितान्तम् ॥

१२२ ISSIIIISS

स्वकर्तव्य मिति विचार्य,
प्रजा पालन निरतोऽसौ ।
अतन्द्रिर्नृपनयदक्षो,
दिनानि व्यपनयतिस्म ॥

१२३ SISIIIISS

अश्वमेधमथ विधातुं,
निश्चिकाय गुरुमतेन ।
जानकी प्रतिकृति रासीत्,
काञ्चनी यजन विधानात् ॥

१२४ IISIIIISS

अथ लक्ष्मण मधिकृत्य,
बहु सैन्य परिवृतं सः ।
हयमेध हयं मुमोच,
मख लक्षण समुपेतम् ॥

१२५ SSIIIIISS

अश्वोऽध्यवनि परितोऽटन्,
वाल्मीकि पद मुप पेदे ।
आकर्णयदथ लवस्तं,
ह्याश्चर्य जनक मखाश्वम् ॥

१२६ ISIIIIISS

निशम्य सपदि वटुभ्यः,
स तैः सह समुपयातः ।
मखाश्व मिति तमवेत्य,
रणाय प्रसभमबध्नात् ॥

१२७ SIIIIIISS

यज्ञ तुरग परिरक्षाः,
तं शिशुरय मिति मत्वा ।
वाजिन मिम मवमुच्य,
'विद्रव' समुदितवन्तः ॥

१२८ IIIIIIISS

निजवल निकषमश्वं,
तमतिशय वल शाली ।
समर कृतमति रैच्छद्,
नहि कथमपि विमोक्तुम् ॥

१२९ SSSSSSSIS

शस्त्रास्त्रै र्भीमैर्दिव्यैरपि,
घोरं तत्रासीदायोधनम् ।
रक्षाध्यक्ष प्रष्ठो लक्ष्मण-
स्तत्स्था वाश्चर्यं प्राप्तश्चिरम् ॥

१३० ISSSSSSIS

निशम्य श्रीरामोऽत्यद्भुतं,
सुविक्रान्तं बालं चरात्  ।
परीप्सुस्तत्रो पेतो वशी,
द्रुतं योधान् युद्धाद् वारयन् ॥

१३१ SISSSSSIS

तत्र मूर्तं वीराख्यं रसं,
तेजसा राजन्तं निर्भयम्  ।
अन्वयाख्ये जिज्ञासुस्तदा,
पृष्टवान् सस्नेहं तं प्रभुः ॥

१३२ IISSSSSIS

ऋषि वाल्मीकि स्तत्रागतो,
निखिलं तत्त्व प्राकाशयत्  ।
यमजौ तत् पुत्रौ सीतया,
सहितौ स्वीकर्तुं चादिशत् ॥

१३३ SSISSSSIS

लोकापवादः सीताकृते,
मिथ्येति सर्वान् सत्यापयन् ।
आत्म प्रभावेणा त्यद्भुतं,
संदर्शयामासासावृषिः ॥

१३४ ISISSSSIS

तदातु रामायोऽवबुधो,
विदेहजां पूता मादिशन्  ।
स्वयं निजाङ्के नादाय तां,
समर्पयामासाधीक्षकः ॥

१३५ SIISSSSIS

ब्रह्म ऋषि प्रत्ता वात्मजौ,
स्वीकृतवान् प्रीतः सादरम् ।
वाजिमखं प्रक्रान्तं पुरा,
पूर्ण मकार्षीद् रामस्ततः ॥

१३६ IIISSSSIS

हुतवहेन ब्रह्मर्षिणा,
जन समक्षं सत्यापिता ।
अवनिजा पूतापि स्वयं,
प्राविशदङ्कं सा भुवः ॥

१३७ SSSISSSIS

श्रीरामः प्रजानां पालनं,
धर्मं मन्यमानः शाश्वतम् ।
स्वान्ते दूयमानोऽपि व्यधात्,
उच्चा न व्यथन्ते कर्हि चित् ॥

१३८ ISSISSSIS

विधायाखिलं लोकं प्रभुः
स्वधर्मेरतं मोदान्वितम् ।
निरीतिं निरातङ्कं मुहुः,
स्थितिं स्थापयामासोचिताम् ॥

१३९ SISISSSIS

ज्येष्ठ मात्मजं राज्ये कुशं,
संनियुज्य गोलोकोत्सुकः ।
सानुजः स पौरः सानुगो,
दिष्ट मेत्य धाम स्वं ययौ ॥

१४० IISISSSIS

स्थति पालकः श्रीराघवः,
हृदयं समाविष्टः सताम् ।
इह राजते शश्वद् विभुः,
जगती तले सर्वत्र सः ॥

१४१ SSIISSSIS

रामस्य चरित्रं पावनं,
विज्ञाय धिया ध्येयं सदा ।
लोकस्य न हि श्रेयः परं,
तस्मादनुकार्यं शर्मदम् ॥

१४२ ISIISSSIS

स्थितो हृदि रामाख्यो हरिः,
सदा स्मरणीयो मानवैः ॥
स एव च गेयः सन्ततं,
दशास्वखिलासु श्रेयसे ॥

१४३ SIIISSSIS

चिन्तय भवक्लेशा पहं
श्री हरि ममुं लोकाधिपम् ।
जागृहि प्रमीलां संत्यज,
मानव ! वयोतिक्रामति ॥

१४४ IIIISSSIS

परिहर चिन्तां भौतिकीं,
प्रशमय शश्वन् मानसम् ॥
क्षणिक मिदं ते जीवितं,
विगणय धर्मं संचिनु ॥

१४५ SSSSISSIS

आत्मानुध्यान मेवाश्रय,
भोगासक्तिं सुदूरात् त्यज ।
दोषापास्ति धिया धारय,
संसाराब्धिं मुदा संतर ॥

१४६ ISSSISSIS

भवेऽस्मिन्नास्ति किंचिद् ध्रुवं,
विचिन्त्येदं हरिं चिन्तय ।
तरीतुं चेद् भवाब्धि सुखं,
समीहा मानसे मानव ! ॥

१४७ SISSISSIS

संसृतिं मोक्तु कामो जनः,
संनियम्येन्द्रियाश्वान् धिया ।
गोचरेभ्यो निवार्य स्वयं,
मानसं योजये दात्मनि ॥

१४८ IISSISSIS

परिकल्प्याहिभोगानिव,
त्यज भोगान् सुदूरादिमान् ।
यतमानो ऽनिशं मानव,
सुकृतं संचिनु श्रेयसे ॥

१४९ SSISISSIS

भासा विभाति दृश्यं जगत्,
तस्यैव सर्वं शक्ते रिदम् ।
एकः स एव गूढः शिवः,
सर्वत्र मायया लक्ष्यते ॥

१५० ISISISSIS

विराजते विभुः प्राणिषु,
धिया विचार्य संशुद्धया ।
कदापि नाचरेत् कस्यचित्,
तदात्मकस्य द्रोहं जनः ॥

१५१ SIISISSIS

संसृतिभाजि शान्तिः कुतः,
शान्तिम भीप्सुना सर्वदा ।
मानस शत्रवः साग्रहं,
योग वलेन जेया धिया ॥

१५२ IIISISSIS

अखिल दोष लिप्तोऽपि यो,
जगति गण्यते सज्जनः ।
भवति सोऽत्र लोकाधिपः,
समय आगतः कीदृशः ? ॥

१५३ SSSIISSIS

दोषो यत्र गुणः ख्याप्यते,
साद्गुण्यं त्वसदारोप्यते ।
आश्चर्यं हि शुभाशंसनं,
तस्मिन् नेतरि संभाव्यते ॥

१५४ ISSIISSIS

समर्थो जनता वञ्चने,
वित्त शक्ति वलात् पीडने ।
बहुच्छद्म परो हिंसने,
प्रवीणोऽद्यतनो नायकः ॥

१५५ SISIISSIS

सर्व दोष निधिः प्रायशः,
साम्प्रतं कितवो नायकः ।
स्वार्थ साधन दक्षः सदा,
लक्ष्यते जनता शोषकः ॥

१५६ IISIISSIS

मतिभेदतमः संवृतान्,
सरलानतिमुग्धाञ् जनान् ।
परि वञ्च्य मृषा लोभनैः,
विदधाति वशे नायकः ॥

१५७ SSIIISSIS

संयम्य करणान्यात्मना,
नित्यं हृदि हरिं चिन्तय ।
उद्धर्तु मृजु मार्गो ऽन्यथा,
संसार जलधि र्दुस्तरः ॥

१५८ ISIIISSIS

जनान् निरपराधानपि,
निपीडयति दुष्टाशयः ।
अथा चरति लोकाप्रियं,
जनोऽजनि कलौ कीदृशः ? ॥

१५९ SIIIISsIs

नित्यमुपकरोत्यात्मना,
वर्जयति परोत्पीडनम् ।
आचरति शुभं प्राणिषु,
प्राणिति भुवने सज्जनः ॥

१६० IIIIISSIS

भजति सुकृतं सर्वदा,
परि हरति पापं च यः ।
सुखयति जनान् दुर्गतान्,
इह भवति वन्द्यो हि सः ॥

१६१ SSsSSISIS

संत्वान् भीतान् भीति कारणाद्,
युक्तः शक्त्या साधु रक्षति ।
कुत्रापि द्रोहं न कर्हि चिद्,
वन्द्यः सर्वत्रैव सज्जनः ॥

१६२ ISSSsISIS

परच्छिद्रान्वेषणं सदा,
प्रयत्नात् कर्तुं समीहते ।
असंख्यान् दोषान् न चात्मनः,
कथं चिद् धूर्तो विचारयति ॥

१६३ SISsSISIS

आततायी सज्जनानपि,
द्वेष्टि नित्यं कारणं विना ।
तस्मिन् विश्वासं जनो नहि,
जातुचिद् धीमान् समाचरेत्,

१६४ IISSSISIS

भवतादर्थागमो मम,
मनसा लोकः सदेच्छति ।
नियतं लोके समादरो,
न विना तं जायते यतः ॥

१६५ SSISSISIS

अर्थोऽस्तु नः केवलं भुवि,
कामं गुणौघोऽपि नश्यतु ।
अर्थ प्रधाने युगे जनो,
ह्याशंसमानोऽवलोक्यते ॥

१६६ ISISSISIS

अधोगते र्हेतु रात्मनो,
निजेन्द्रियाणामसंयमः ।
अतः प्रयत्नेन धीमता,
सदा विधेयः सुसंयमः ॥

१६७ SIISSISIS

साधु समाजः शुभावहः,
दुर्लभ एभिः समागमः ।
तत्त्व बुभुत्सुः सदा जनः
संगतये स्यात् समुत्सुकः ॥

१६८ IIISSISIS

उपकृतिः सर्वं मानवैः,
सकल भूतेषु सर्वदा ।
अभिलषद्भि र्निज हितं,
प्रति विधेया प्रयत्नतः ॥

१६९ SSSISISIS

दुष्टैः संगतिर्न शस्यते,
हेया दूरतो हि ते खलाः ।
संसेव्या नरेण सज्जना,
यत्नेन स्वभूति मिच्छता ॥

१७० ISSISISIS

जगत्यां लुठन्ति वञ्चकाः,
न वित्तानि केवलं सताम् ।
समानानसूनप्यायुषा,
समारोप्य दुष्कृतं मृषा ॥

१७१ SISISISIS

आचरन्ति ये विगर्हितं,
शोषणं प्रकुर्वते वलात् ॥
ते मता हि लोक नायकाः,
कैतवं हि पूज्यते कलौ,

१७२ IISISISIS

जन नायक समाश्रयाद्,
रहितोऽपि वस्तुतो गुणैः ।
लभते समादरं जनो,
गुणिना मनादरः कलौ ॥

१७३ SSIISISIS

उद्भाव्य मृषा परस्परम्,
भेद भ्रम मद्य नायकाः ।
उत्पाद्य विरोध भावनां,
स्वार्थं खलु साधयन्ति ते ॥

१७४ ISIISISIS

परस्पर भेद भावनां,
विकीर्य वहुधा प्रवञ्चनैः ।
जनान् सरलान् प्रतार्य हा
लुठन्ति मिषेण नायकाः ॥

१७५ ऽ।।।ऽ।ऽ।ऽ

अद्य गणनायकः खलः,
शक्ति धन गर्वितो जनान् ।
वृत्त रहितो विलुम्पति,
पीडयति च प्रतीपगान् ॥

१७६ ।।ऽ।।ऽऽ।ऽ

नय विनयामि वर्तनं,
क्वचिदपि नाद्य लक्ष्यते ।
जन गण मानसं ध्रुवं,
चल मपथें ऽभिवर्तते ॥

१७७ ।ऽऽऽ।।ऽ।ऽ

उद्धतुँ संस्कृति मात्मनः,
सन्नद्धा जागरिता जनाः ।
आशूत्थायाद्य प्रयत्यताम्,
उत्थानं देवगिरो यथा ॥

१७८ ।ऽऽऽ।।ऽ।ऽ

भवेल्लोकेषु परस्परं,
प्रचारः संस्कृत भाषया ।
द्युसद् वाण्या मनुरागतः,
सदुत्साहो जन मानसे ॥

१७९ ऽ।ऽऽ।।ऽ।ऽ

देव वाणी परमाद् भुता,
सर्वदा यच्छति मङ्गलम् ।
भेद भावं च परस्परं,
दूरयत्यात्म प्रभावतः ॥

१८० ।।ऽऽ।।ऽ।ऽ

सुर वाण्याः परिशीलनं,
कुरुते भौतिकतां तिरः ।
सृजत्याध्यात्मिक भावनां,
नितरां शान्ति मथात्मनः ।।

१८१ ऽऽ।ऽ।।ऽ।ऽ

संत्यज्य भौतिकतां जनः,
प्राप्नोति शान्तिमभीप्सिताम् ।
सर्वात्मना मनुजः सदा,
यत्नं तदर्थ मथाचरेत् ।।

१८२ ।ऽ।ऽ।।ऽ।ऽ

विरोध भावनया चिराद्,
अशान्ति रात्मनि जायते ।
स्व शान्तिमाप्तु मतोजनः,
विरोध भावमिह त्यजेत् ।।

१८३ ऽ।।ऽ।।ऽ।ऽ

वित्त चयं दुरितैरपि,
सम्प्रति मानव ईहते ।
वृत्तविहीनतया परं,
विन्दति साधुविगर्हणाम् ।।

१८४ ।।।ऽ।।ऽ।ऽ

कपट पाटव पण्डितो,
वृक इवायमभून्नरः ।
यदभिभूय बलात् परं,
धन मसून् हि जिहीर्षति ।।

१८५ SSSIIISIS

अन्यायेन यदुपार्जितं,
वित्तं भूरि तर मात्मना ।
नश्यत्याशुचपला यथा,
वृत्तं तिष्ठति चिरं खलु ॥

१८६ ISSIIISIS

सदाचारः परि पाल्यतां,
प्रयत्नेन मनुजैः सदा ।
अनायास मुप लभ्यते,
यशोभूति रतुला ततः ॥

१८७ SISIIISIS

जीवनं सरल मालयं,
साधनीय मपराश्रितम् ।
श्लाघनीय मपि साधुभिः,
सच्चरित्र मिह गीयते ॥

१८८ IISIIISIS

मधुरेण वचसा सदा,
व्यवहार्य मखिलैः सह ।
तनुते हृदि मुदं वचो,
मधुरं व्यवहृतं जनैः ।

१८९ SSIIIISIS

धर्मे ऽभिरुचिरनारतं,
भूते रधिगम साधनम् ।
पापाद् विरति रसंशयं,
पन्थाः सरलतरो मतः ॥

१९० ।ऽ।।।।ऽ।ऽ

रजोगुण विनिमीलितः,
पदार्पण मपथे जनः ।
करोति विवश आत्मना,
वलेन नियमयेन्मनः ॥

१९१ ऽ।।।।।ऽ।ऽ

नोचितमपथ वर्तनं,
तद् बुधजन जुगुप्सितम् ।
भूति मभि लषता सदा,
कार्यं मपथ विवर्जनम् ॥

१९२ ।।।।।।ऽ।ऽ

सुकृत फलमभीप्सुना,
गुरु जन पद वन्दनम् ।
भगवति सहजा रतिः,
सुचरित मनु पाल्यताम् ॥

१९३ ऽऽऽऽऽऽ।।ऽ

कामं क्रोधं लोभं त्रिगणं,
राग द्वेषौ नित्यं विसृज ।
लोके कल्याणं वाञ्छसि चेत्,
सानन्दं गोविन्दं भज तम् ॥

१९४ ।ऽऽऽऽऽ।।ऽ

सु सखे संत्यज्याशामखिलां,
चिदानन्द श्चिन्त्यो हृदये ।
दुरापः संप्राप्तः सुचिरात्,
समुद्धारायायं समयः ॥

१९५ SISSSSIIS

वस्तुतः सर्वे स्वार्थपरा,
गृध्नवः प्रायोऽसत्पथगाः ।
क्रूर कर्माणोऽन्यस्य धनं,
छद्मना सूनप्याददते ॥

१९६ IISSSSIIS

कपटाचाराः क्रूरतया,
प्रसिता अन्येषां कदने ।
न विशङ्कन्ते ऽनाचरणाद्
मनुजादा जाता मनुजाः ॥

१९७ SSISSSIIS

प्रायेण पीड्यन्ते सरला,
धूर्ता लभन्ते मान धनम् ।
दृश्यः प्रभावो ह्यद्य कलेः,
पुंसाँ न पूज्या यत्र गुणाः ॥

१९८ ISISSSIIS

परिस्थितिश्चेत् स्याद् विषमा,
सदैव कीर्तिं कीर्ति धनाः ।
अपत्य–प्राणेभ्योऽपि भुवि,
गरीयसीं जानन्ति जनाः ॥

१९९ SIISSSIIS

रक्षति रामो राजमणिः,
भक्त जनान् दीनानखिलान् ।
आतमरतैः कार्यं मनुजैः,
तत् स्मरणं नित्यं शुभदम् ॥

२०० IIISSSIIS

अव ततारार्ता नवितुं,
दनुज विध्वंसी समरे ।
जन परित्राता सततं,
जयति रामो राजमणिः ॥

२०१ SSSISSIIS

मात्स्य न्याय एर्तहि कलौ,
दृष्टं याति सर्वत्र भुवि ।
श्रीरामो दयालुः शरणं,
नोपायोऽस्ति काले विषमे ॥

२०२ ISSISSIIS

रती राम भद्रे परम,
स्थिरा जायतां मे सततम् ।
गृहादे विरतिः सपदि,
तनो रात्मनो ह्युत् क्रमणे ॥

२०३ SISISSIIS

जन्म मृत्यु बन्धात् त्वरितं,
मोक्तु मीहसे स्वं यदि रे ।
संत्यजाखिलां भौतिकतां,
चिन्तयात्मना तं सततम् ॥

२०४ IISISSIIS

जगदेतदेकः सृजति,
परि पाल्य यः संहरते ।
अखिल प्रपञ्चस्य प्रभुं,
सततं हृदि संस्मर तम् ॥

२०५ SSIISSIIS

लोका अखिला यस्य वशे,
सत्तां दधते ऽनेक विधाम् ।
योऽनादिरनन्तः पुरुषः,
ध्येयः सततं स स्वहृदि ॥

२०६ ISIISSIIS

पर स्व जिहीर्षा मनसि,
निधाय विनीता ब्रुवते ।
सकैतव मुच्चैर्मधुरं,
जना जगति स्वार्थ पराः ॥

२०७ SIIISSIIS

सन्तत हितैः प्रीतिकरैः,
निश्छल वचोभिर्मधुरैः ।
रञ्जयति लोकान खिलान्
आत्म गुण योगात् सुजनः ॥

२०८ IIIISSIIS

मखरिपु भीतेः सुचिराद्,
मुनिगण मुन्मोचयितुम् ।
अधिविपिनं संन्यवसत्,
दनुज कुलं नाशयितुम् ॥

२०९ SSSSISIIS

रक्षस्त्रासं जहार भुवि,
धर्मं ग्लानिं च योऽहरत ।
पुंभिः स्वश्रेयसे प्रयतैः
ध्येयो नित्यं स राजमणिः ॥

२१० ISSSISIIS

अयोध्यायां बभूव किल,
चतुर्धात्मान माकलयन् ।
हरी रामाभिधानमितः,
परित्रातुं त्वधात् सुजनान् ॥

२११ SISSISIIS

सानुजो यः पितुर्वचसा,
सीतया भार्ययापि सह ।
अध्युवासाटवीं सुचिरं,
रक्षसां निग्रहं विदधद् ॥

२१२ IISSISIIS

कितवाः पूजिता अधुना,
सरलाः पीडिता नितराम् ।
गुणिना मादरो न कलौ,
विगुणा उत्तमा विदिताः ॥

२१३ SSISISIIS

प्राज्ञोऽधुना तिरस्क्रियते,
धूर्तो जनः समाद्रियते ।
साधुर्विषीदति प्रकटं,
प्रायः प्रसीदति चछलभाग् ॥

२१४ ISISISIIS

मनो नियम्प संयमिनो,
निवारयन्ति दुश्चरितात् ।
निवेशयन्ति सम्यग् हरौ,
परित्यजन्ति भौतिकताम् ॥

२१५ SIISISIIS

य: पर पीडनं त्यजति,
सर्व हितं सदा कुरुते ।
नेच्छति लोकतः किमपि,
तस्य जनु भृशं सफलम् ॥

२१६ IIISISIIS

समय मेति नेतृ गणः,
सपदि चैव भञ्जयति ।
सु समयो न कोऽपि तस्य,
निज हितं विचारयति ॥

२१७ SSSIISIIS

प्रजानां हित माचरितुं,
नेतारः सततं विमुखाः ।
नित्यं स्वार्थ परा विदिताः,
सत्यं तेषु मनागपि नो ॥

२१८ ISSIISIIS

अवाप्तुं पद मुच्चतमम्
तदन्यन्नहि किंचिदपि ।
असत्येन विलोभ्य जनान्,
प्रयस्यन्ति हि नेतृजनाः ॥

२१९ SISIISIIS

नेतृतां धन शक्ति बलाच्,
शस्त्रिणां प्रमुखो लभते ।
आचरेत् स हि लोक हितं,
नैतदत्र तु संभवति ॥

२२० IISIISIIS

क्रियया मनसा वचसा,
जगतोऽहितमाचरितुम् ।
ध्रुवमासुरभावमिता,
उदपत्सत दुष्ट जनाः ॥

२२१ SSIIISIIS

देशे सतत मुग्रजना,
निः स्वार्थ मविवेकहताः ।
निघ्नन्ति बहुशः सुजनान्,
लुण्ठन्ति च नृशंसतया ॥

२२२ ISIISIIS

जनापहरणं बहुशो,
विगर्हित मतीव बुधैः ।
निपीडन मनागसि तत्,
परित्यजन मेव शुभम् ॥

२२३ SIIISIIS

दुश्चरित धियो भारते,
सर्वत्र उपरुध्य जनान् ।
हिंसितु मखिलै रुपायैः,
स्वैर मभिचरन्ति मुधा ॥

२२४ IIIIISIIS

विहित मतयो विबुधाः
परजन हिताय सदा ।
जगति विचरन्ति मुदा,
स्वयमपि धृतिं दधते ॥

२२५ SSSSSIIIS

संत्रासाल्लोकानवति यो,
नाना भोगैर्वर्द्धयति च ।
भक्तानुद्धर्तुं कृत मतिः,
सोऽव्यात् सीता जानिरनिशम् ।।

२२६ ISSSSIIIS

स्व कर्तव्यान्नित्य विमुखो,
जनः प्रायः कार्य मधुना ।
समादायोत्कोचमलघुं,
दृढं निर्बन्धात् प्रकुरुते ।।

२२७ SISSSIIIS

अद्य कर्तव्याद् विमुखता,
सर्वतोनर्थस्य जगति ।
कारणं प्रायेण भवति,
तन्निरासः कर्तुं मुचितः ।।

२२८ IISSSIIIS

निज संकल्पं पुनरपि,
जन नेतारो विदधति ।
शपथं ह्यावश्यक मतो
न हि रक्षन्ति प्रण वचः ।।

२२९ SSISSIIIS

अन्योन्य पक्षं रहयितुं,
मिथ्या वचांसि प्रब्रुवते ।
स्वार्थाय संधान पटव,,
किं किं न ते संविदधते ।।

२३० ISISSIIIS

परित्यजन्तु प्रमथनं,
परोपकारं विदधताम् ।
अतः परं नैव सुकृतं,
विजानता माशु सुजनाः ॥

२३१ SIISSIIIS

स्वार्थ निमित्तोऽस्ति हि भवः,
तन् मनसा चिन्तय हितम् ।
जागृहि कालेन शयनाद्,
मोह मिमं संत्यज लघु ॥

२३२ IIISSIIIS

खल जनो वञ्चन पटुः,
अतितरां वक्ति मधुरम् ।
विष मिवावेहि वचनं,
सपदि तस्मादपसर ॥

२३३ SSSISIIIS

सर्वत्राशु मुञ्च ममतां,
योगात् संततं स्मर हरिम् ।
वैराग्यान् मनः प्रशमय,
संसाराब्धि मुत्तर सखे ॥

२३४ ISSISIIIS

हृदो मुञ्च मोह मदिरां,
हरेश्चिन्तनं पिब रसम् ।
शरीरे जहीहि ममतां,
सुखं विज्वरो भव सखे ॥

२३५ ऽ।ऽ।ऽ।।।ऽ

श्री हरिं भजस्व मनसा,
संत्यजा खिलानपि रसान् ।
आश्रयात्मना शुचितया,
सद् गुरुं विहाय कपटम् ।।

२३६ ।।ऽ।ऽ।।।ऽ

स हरि र्भवाब्धि तरणिः,
हृदि चिन्तयेस्तमनिशम् ।
शरणं स एव जगतः,
भज तं विसृज्य विषयान् ।।

२३७ ऽऽ।।ऽ।।।ऽ

जीवं हरि चिन्तन रतं,
मोहः परिकर्षति वलात् ।
चित्तं व्यथते पुनरपि,
माया वशगं भवति च ।।

२३८ ।ऽ।।ऽ।।।ऽ

मनः शुचि धारय हरौ,
निवर्तय संसरणतः ।
तमेव हरिं कुरु तरीं,
तरीतु मगाध जलधिम् ।।

२३९ ऽ।।।ऽ।।।ऽ

संत्यज यमेन विषयान्,
निर्विषय मस्तु च मनः ।
तद् धृति वलेन यमिनः,
सिद्ध्यतु विमुक्ति पथगम् ।।

२४० IIIISIIIS

भवति मनो यदि चलं,
हरि चरणे न रमते ।
विषय पराङ्मुख मतः,
कथमपि धारय सदा ।

२४१ SSSSIIIIS

तृष्णा मुत्सारय जगति,
मोह ध्वान्तं हर हृदयात् ।
ज्ञानालोकं गमय मनः,
देहाध्यासं त्यज सपदि ॥

२४२ ISSSIIIIS

दया दृष्टिं मयि विकिर,
हरे तापं परिहर मे ।
दयालो त्वं मम शरणं,
भवाब्धिं पारय सपदि ॥

२४३ SISSIIIIS

योग युक्तः सुकृत परः,
पालयेच्चेद् यम नियमौ ।
यायुर्दोषाः सपदि लयं,
विन्दते चात्म सुखमलम् ।

२४४ IISSIIIIS

भव सिन्धुं तरितुमना,
हरि माराधय सततम् ।
निरुपायस्य प्रतरतः,
सहि सद्यो भवति तरीः ॥

२४५ SSISIIIIS

माया नटी हरति मनो,
नाना विधं व्यथयति च ।
बुद्धि विमोहयति मुहुः,
चित्रं च दर्शयति जगत् ।

२४६ ISISIIIIS

य इन्द्रियाणि यमयति,
सुनिश्चितं जयति मनः ।
प्रसन्नता मनु भवति,
स विन्दते परम सुखम् ।।

२४७ SIISIIIIS

यः सहते कटु वचनं,
खल जनोक्त मतितराम् ।
आदर मर्हति नितरां,
साधुशिरोमणिरिह सः ।।

२४८ IIISIIIIS

इह खलैः सह वसतिः,
न हि कदाचिदपि सुखा ।
इति विचार्य हृदि जनाः,
जगति तां परि हरत ।।

२४९ SSSIIIIIS

आपन्नार्ति शमन रतः,
श्रीरामो जयति जगति ।
पापाद् दीन जन मखिलं,
दिश्या न्मोदभर मतुलम् ।।

२५० ISSIIIIIS

जनेभ्योऽतिशय सुखदः,
समेषां विपदपहरः ।
प्रमोदं प्रदिशतुतरां,
स रामस्त्रिभुवन पतिः ॥

२५१ SISIIIIIS

भौतिके महति विभवे,
यस्य मानस मति तराम् ।
सक्त मात्मरति विमुखं,
सद् गतिं व्रजतु स कथम् ॥

२५२ IISIIIIIS

सततं वितरति सुखं,
जनताघशमन करः ।
मनसा त्रिभुवन पतिं,
भज तं परम गतिदम् ॥

२५३ SSIIIIIIS

दृश्यं सृजति जगदिदं,
काले हरति च सहसा ।
उज्जीवित सकल जनं,
लोकाधिपति रवतु सः ॥

२५४ ISIIIIIIS

प्रभुः सृजति जगदिदं,
स एव हरति सकलम् ।
अनारत मवति च यः,
तमेव भजत मनसा ॥

२५५ ऽ।।।।।।ऽ

भक्त जन मवति विभुः,
संहरति च रिपु कुलम् ।
यो वसति हृदि सततं,
तं भजत भुवन पतिम् ॥

२५६ ।।।।।।।।ऽ

अघ चय मपनयेत्,
स हि भुवन परिवृढः ।
जगति भजत सततं,
सुजन कुल मवति यः ॥

२५७ ऽऽऽऽऽऽऽऽ।

नित्यानन्दो विश्वं व्याप्नोति,
सर्वज्ञो ऽसौ सर्वं जानाति ।
आलोकं लोकाध्यक्षो राति,
दृष्टि नित्यं योगा दायाति ॥

२५८ ।ऽऽऽऽऽऽऽ।

स सर्वान्तर्यामी ध्यानेन,
शनैर्दृष्टि हृत्पद्मे याति ।
प्रयत्नस्तत् साक्षात् काराय,
विधेयो लोकै रम्यासेन ॥

२५९ ऽ।ऽऽऽऽऽऽ।

हेतुजातः स्नेहः स्थायी न,
निर्गते हेतौ तद् भावो न ।
य विना हेतुं जातो जातु,
शस्यते सद्भिः संवादेन ॥

२६० ।।ऽऽऽऽऽऽ।

स हरिश्चिन्त्यो नित्यं मूढ !
भव बन्धात् सद्यो मोक्षाय ।
त्यज भौमान् भावान् यत्नेन,
समयो रंहस्वी निर्याति ।।

२६१ ऽऽ।ऽऽऽऽऽ।

रामः सदा साधून् प्रीणाति,
धर्मे रतो मर्यादां रक्षति ।
त्रातुं च धर्मं दुष्टान् हन्ति,
ध्येयः स नित्यं कल्याणाय ।।

२६२ ।ऽ।ऽऽऽऽऽ।

अवश्य कार्याण्यायासेन,
निरस्य विघ्नान् संपाद्यानि ।
विमुच्य तन्द्रा मुत्थायेह,
सदा मनुष्यैं मङ्गल्यानि ।।

२६३ ऽ।।ऽऽऽऽऽ।

धर्मं समुद्धारार्थं सोऽत्र,
रक्षण हेतोः साधूनां च ।
मानव रूपेणो पागम्य,
स्थापयते मर्यादां साधु ।।

२६४ ।।।ऽऽऽऽऽ।

जगति सर्वं रामः पाति,
मनसि नित्यं चिन्त्यो मित्र ।
शरणदो नान्यः कोऽप्यत्र,
परिवृढोऽसौ त्रैलोक्यस्य ।

10,047

२६५ SSSISSSSI

श्री कृष्णो जगत् कल्याणाय,
गोलोकाद् भुवं प्रत्यायाति ।
सत् त्राणेन धर्मं संस्थाप्य,
वैकुण्ठं निज लोकं याति ॥

२६६ ISSISSSSI

हरि र्वन्दनीयो निध्याय,
हृदि ध्यात एवासावेति ।
द्रुतं मोह जालं विच्छिद्य,
प्रकाशं तनोति ज्ञानेन ॥

२६७ SISISSSSI

कर्म योग मन्त्रा शंसन्ति,
सिद्धये हि नित्यं कृत्येषु ।
साध्य कर्म-सिद्धिं प्राप्नोति,
यः करोति यत्नं योगेन ॥

२६८ IISISSSSI

इह यो हि सिद्धिं साध्येषु,
लभते विनैवा यासेन ।
भगवत् कृपा पात्रं सोऽत्र,
जनतां प्रशंसां प्राप्नोति ॥

२६९ SSIISSSSI

देहे ममतां रूढां मुञ्च,
लोके न हि सारं जानीहि ।
उत्सारय मोहं द्राङ् मूढ,
रामं जगदीशं वन्दस्व ॥

२७० ।ऽ।।ऽऽऽऽ।

विषीदति गच्छन् मार्गेण,
जनो ह्युपहासं प्राप्नोति ।
य उत्पथगा मोदन्तेऽत्र,
कलौ जन वन्द्यास्ते भान्ति ।।

२७१ ऽ।।।ऽऽऽऽ।

स्वार्थ कुशलो लोके भाति,
यः सफलतां संप्राप्नोति ।
बुद्धि पटुतां तां शंसन्ति,
सद्भिरपि स श्लाघां याति ।।

२७२ ।।।।ऽऽऽऽ।

हरि भजनं श्रेयोदायि,
मनसि विचारं संधेहि ।
भवति विना तेनातीव,
विफल मिदं लोके जन्म ।।

२७३ ऽऽऽऽऽ।ऽऽ।

साध्वाचारो विषीदन्नत्र,
धन्ते चिन्ते मतिं पापे न ।
आचारो रक्षणीय स्तत्,
वित्तैः प्राणै ध्रुवं कृच्छ्रेऽपि ।।

२७४ ।ऽऽऽ।ऽऽऽ।

चरित्रं रक्षणीयं साधु,
सदैवापद्गतै र्लोकेऽत्र ।
चरित्रे विप्लुतिं याते तु,
कथं चित् तत् परावर्त्यं न ।।

२७५ ऽ।ऽऽ।ऽऽऽ।

प्राणि मात्रे दयां कुर्वीत,
ते निजांशाः प्रभोः सर्वेऽपि ।
संततं चेतसा संचिन्त्य,
हिंसनं नोचितं कस्यापि ॥

२७६ ।।ऽऽ।ऽऽऽ।

अखिला मानवा स्तुल्या हि,
घटते नैव भेद स्तेषु ।
उचितो बन्धु भावस्तत्र,
न विरोधो भवेद् धर्मेण ॥

२७७ ऽऽ।ऽ।ऽऽऽ।

सर्प भ्रमो यथा रज्जौ हि,
द्वैत भ्रम स्तथा जानीहि ।
दृश्यं विभाति सत्यं येन,
माया प्रपञ्च मेतं विद्धि ॥

२७८ ।ऽ।ऽ।ऽऽऽ।

जनेन स्वप्न दृष्टं वस्तु,
निवर्तते प्रबोधं प्राप्य ।
तथा परावरे दृष्टे हि,
लयं प्रयाति दृश्यं त्वत्र ॥

२७९ ऽ।।ऽ।ऽऽऽ।

स्वार्थ परायणो निन्द्योऽस्ति,
निन्द्यतरः परार्थं हन्ति ।
अत्र नराधमं तं वित्त,
यस्तु निरर्थ मेवा हन्ति ॥

२८० ।।।ऽ।ऽऽऽ।

कुरु हितं सदा सर्वस्य
वद हितं प्रियं संचिन्त्य ।
तनु शुभावहं सत्कर्म,
जय भवं विना यासेन ॥

२८१ ऽऽऽ।।ऽऽऽ।

श्रीरामं भज कल्याणाय,
निष्कामो भव बन्धं छिन्धि ।
आहेयानिव भोगान् विद्धि,
चेतश्चेतय कालोऽ त्येति ॥

२८२ ।ऽऽ।।ऽऽऽ।

भवाब्धि तरितुं मोदेन,
सदा संस्मर राम नाम ।
तरीं तां निरपायां विद्धि,
दृढं रक्ष मनो योगेन ॥

२८३ ऽ।ऽ।।ऽऽऽ।

राम नाम हृदि ध्यानेन,
संनिधेहि मणि संरक्ष ।
सत् प्रकाश ममोघं चाप्य,
त्वं सुखं विहरा नन्देन ॥

२८४ ।।ऽ।।ऽऽऽ।

ममता सकलं बध्नाति,
स्ववशं नयते रागेण ।
इह हेतुरयं बन्धस्य,
त्यज तं सततं यत्नेन ॥

२८५ SSI।।SSSI

संयम्य विषयेभ्यः खानि,
चेत श्चपलतां संयच्छ ।
चेतसि वशगे जीवो हि,
मुक्तो भवति साक्षात् कृत्य ॥

२८६ ।S।।।SSSI

परो हि पुरुषार्थ स्तात,
यदात्म परिबोध स्तेन ।
यतस्व सततं योगेन,
सुखं तर भवाब्धि चाशु ॥

२८७ SI।।।SSSI

दुःख मविरतं कस्यापि,
नो सुख मिव तिष्ठेदत्र ।
सज्जन इति संनिश्चित्य,
गच्छति मनसोद्वेगं न ॥

२८८ ।।।।।SSSI

य उपकृति सक्ताः सन्ति,
जगति जना वन्द्यास्ते हि ।
अपकृति पराः कार्येण,
विफल मिह तेषां जन्म ॥

२८९ SSSSS।SSI

सिद्धिः साध्ये धीमतामेव,
कार्ये दक्षास्ते प्रशस्या हि ।
स्वार्थ भ्रंशो मूर्खता त्रास्ति,
स्वार्थः साध्यः सत् प्रयत्नेन ॥

२६० ।ऽऽऽऽ।ऽऽ।

कदा चिन् नृत्यन् प्रमोदेन,
कदाप्याक्रोशन् विषादेन ।
लघुर्लक्ष्यो लोक एषोऽत्र,
समाना धीरास्तु सर्वत्र ।।

२६१ ऽ।ऽऽऽ।ऽऽ।

मित्र ! सौख्यानीह दुःखानि,
चक्रवद् भ्राम्यन्ति लोकस्य ।
वासरा स्तुल्या न कस्यापि,
माशुचो व्यत्येति कालो हि ।।

२६२ ।।ऽऽऽ।ऽऽ।

धन माप्याल्पेन यत्नेन,
लघवो माद्यन्ति दर्पेण ।
सरितो वर्षाम्बु संप्राप्य,
बहुधा निर्यान्त्य मार्गेण ।।

२६३ ऽऽ।ऽऽ।ऽऽ।

न्याय प्रवृत्तस्य सर्वेऽपि,
साहायक व्यग्रतां यान्ति ।
यानं पथा सुप्रशस्तेन,
लोके समेषां शुभदायि ।।

२६४ ।ऽ।ऽऽ।ऽऽ।

हिताय लोकस्य कार्याणि,
जनेन शक्त्या विधेयानि ।
विराजते सर्वं भूतेषु,
स सर्व कालेषु सर्वत्र ।।

२९५ SIISSISSI

पश्यति नैकोऽपि मामत्र,
नाचर पापानि मत्वेति ।
ईश इह लोकते मूढ,
मानव कृत्यं हि सर्वत्र ॥

२९६ IIISSISSI

प्रथयितुं नाम कीर्ति च,
मनुज ईहेत कार्याणि ।
लसति कीर्तिश्चिरं तस्य,
जगति नामोज्ज्वलं यस्य ॥

२९७ SSSISISSI

अन्तः शत्रवो हि सर्वेऽपि,
दुर्जय्या विना सुयोगेन ।
योग श्चित्त संयम स्तात,
कामादींस् जयेदुपायेन ॥

२९८ ISSISISSI

मनो निग्रहः कृतो येन,
जिताः शत्रवोऽखिला स्तेन ।
सुयोगी मनो वशे यस्य,
स उच्चैः पदं ध्रुवं याति ॥

२९९ SISISISSI

इन्द्रियाणि तात जेयानि,
निग्रहेण चेतसस्तानि ।
आनयेर्वशं विरागेण,
भौतिकेषु सर्वं भोगेषु ॥

३०० ।।ऽ।ऽ।ऽऽ।

जरसा गृहीत देहेन,
सुकृतं कदापि शक्यं न ।
सततं विधेहि यत्नेन
रहितं बलेन यावन्न ।।

३०१ ऽऽ।।ऽ।ऽऽ।

यावत् सरुजं शरीरं न,
हृयोजो रहितं चं ह्रासेन ।
तावत् सुकृतं विधेह्याशु,
यत् स्याच्छुभ मात्मनीनं च ।।

३०२ ।ऽ।।ऽ।ऽऽ।

इदं न सखे चिरं स्थायि,
दृढं मनसा सुनिध्याय ।
विधेहि शुभं शरीरेण,
द्रुतं यदिहाद्य शक्नोषि ।।

३०३ ऽ।।।ऽ।ऽऽ।

मानव निगृह्य योगेन,
धारय मनो वशी कृत्य ।
राम चरणारविन्दे हि,
उत्तर भवाब्धि मह्नाय ।।

३०४ ।।।।ऽ।ऽऽ।

अनवरतं मनो धेहि,
हरि चरणारविन्दे हि ।
भव जलधिं तरीतुं तु,
कुरु तरणिं तदेवाशु ।।

३०५ SSSSIISSI

हेयं सर्वं जगदालोच्य,
कामान् सर्वान चिरान्मुञ्च ।
मोहं दारादिषु संत्यज्य,
ब्रह्माद्वैतं प्रतिपद्यस्व ॥

३०६ ISSSIISSI

न दैवं कश्चिदिहात्येति,
विदित्वेदं ह्यनुवर्तस्व ।
तथापि त्वं पुरुषार्थं न,
कदापि त्यज यथा शक्ति ॥

३०७ SISSIISSI

साधयारं निज कार्याणि,
बुद्धि योगेन विना छद्म ।
छद्मना साधित मह्नाय,
प्रायशो नश्यति कार्यं तु ॥

३०८ IISSIISSI

तमसा ग्रस्त मना अत्र,
किम कार्यं न विजानाति ॥
शुभमिच्छु र्मनुजो जातु,
नहि कोपस्य वशं यातु ॥

३०९ SSISIISSI

प्राणैर्धनैरपि यत्नेन,
प्राज्ञो जहाति न यो जातु ।
धर्मं तु रक्षति कृच्छ्रेऽपि,
ब्राह्मं लोक मवाप्नोति ॥

३१० ।ऽ।ऽ।।ऽऽ।

धनानि कल्पय धर्माय,
शुभानि संतनु देहेन ।
विमुञ्च निन्दित कार्याणि,
मनो निधेहि हरौ मित्र ॥

३११ ऽ।।ऽ।।ऽऽ।

स्वार्थ परो ऽखिल लोकोऽस्ति,
स्वानुभवेन विजानीहि ।
साधय युक्ति वलेनात्र,
मित्र ! निजाखिल कार्याणि ॥

३१२ ।।।ऽ।।ऽऽ।

मधुर भाषित माकर्ण्य,
जगति तुष्यति सर्वोऽपि ।
मृदु हितं च वचः साधु,
न परुषं वचनं ब्रूहि ॥

३१३ ऽऽऽ।।।ऽऽ।

कारुण्यं वितनु भूतेषु,
द्वेषं प्राणिषु कदाचिन्न ।
चित्ते संस्मर हरिं मित्र,
संसारं तर सु योगेन ॥

३१४ ।ऽऽ।।।ऽऽ।

दरिद्रान् भर यत्नेन,
धनं नश्यति हि कालेन ।
ध्रुवं सत्य मिद माधेहि,
प्रदत्तं न लय मायाति ॥

३१५ SISIIISSI

आत्मना तमिह जानीहि,
भासते जगदिदं येन ।
एतमेव हृदि निध्याय,
सोऽमरत्व मुपयाति हि ॥

३१६ IISIIISSI

अभिकाङ्क्षित प्रदानेन,
भुवि को न वश मायाति ।
अतएव तु वशीकृत्य,
चतुरः सफलता मेति ॥

३१७ SSIIIISSI

उत्कोचमिह प्रशंसन्ति,
लोकाः सफलयितुं कर्म ।
कार्याणि न हि प्रसिध्यन्ति,
कस्यापि विना तेन लघु ॥

३१८ ISII/ISSI

विधिर्यदि विमुख स्तस्य,
न कर्म सफलतां याति ।
सखे विधि मनु वर्तस्व,
प्रसीदति स तु यावन्न ॥

३१९ SIIIIISSI

स्वप्नसदृश मिदं विद्धि,
जागृहि मनसि बोधेन ।
आचर सुचरितं तात,
जन्म सफलय योगेन ॥

३२० ।।।।।।ऽऽ।

तनु सुकृततति तात,
परिहर दुरितान्याशु ।
जगति किमपि सारं न,
हरि मनु मनसा याहि ।।

३२१ ऽऽऽऽऽ।ऽ।

सर्वात्मा हृद्देशे समस्ति,
साक्षात् कर्तुं यत्नं विधेहि ।
अन्तर्ध्यानं तद्दर्शनाय,
संलक्ष्योऽसौ बाह्येन्द्रियै र्न ।।

३२२ ।ऽऽऽऽऽ।ऽ।

त्यजान्योन्यं द्वेषं क्षणेन,
तमेवाजस्रं संगृणीहि ।
दया भावं भूतेषु धेहि,
सदा जीवन्मुक्तः समेधि ।।

३२३ ऽ।ऽऽऽऽ।ऽ।

उग्र कर्माणः संप्रतीह,
निन्दनीयं कर्माचरन्ति ।
पीडनै रातङ्कं प्रसार्य
सत्सु वैरं चोद्भावयन्ति, ।।

३२४ ।।ऽऽऽऽ।ऽ।

जनतायाः पीडा कराणि,
भुवि ये कर्मण्या चरन्ति ।
सुजनै र्निन्द्या स्ते भवन्ति,
नितरां दण्ड्याश्चात एव ।।

३२५ SSISSSISI

उग्रस्वभावा दुष्कृतानि,
आतन्वते लोकक्षयाय ।
तेषा मकार्यं विद्यते न,
यत्नेन दूरेत्या भवन्ति ॥

३२६ ISISSSISI

पुरापि दुष्कृत्यै रसुराः,
सतोजना नुत्पीडयन्ति ।
त उग्रनामानः पुरेव,
समाचरन्ती हाधुनापि ॥

३२७ SIISSSISI

मानव मात्रे बन्धु भाव,
आचरितव्यो मानवेन ।
जातु न विद्वेषोस्तु तेषु,
एष ऋजुः पन्था नयेन ॥

३२८ IIISSSISI

वचसि माधुर्यं निधेहि,
वितर दीनेषु दयां हि ।
तनु समीहां कीर्तयेऽत्र,
सुचरितं यत्नेन रक्ष ॥

३२९ SSISSSISI

आतङ्कं प्रसार्याखिलेषु,
राष्ट्र द्रोहिणो मानवेषु ।
अन्यायात् परार्थं विलुण्ठ्य,
सर्वेषां हितं ध्वंसयन्ति ॥

३३० ISSISSISI

अभेदेन ये ह्याचरन्ति,
हिताधायिनस्ते भवन्ति ।
समेषां हिताय यतस्व,
हितं वस्तुतस्तत् कल्पय ॥

३३१ SISISSISI

अत्र कः परो वा निजोऽस्ति,
साधु पश्यतो मानवस्य ।
भेद भावनां दूरीकृत्य,
सर्वदा सखे मोद मेहि ॥

३३२ IISISSISI

स हरि हृंदिस्थः क्षणेन,
कृपया सुबुद्धिं प्रदाय ।
हृदयं च धर्मे नियोज्य,
दुरितानि दूरी करोतु ॥

३३३ SSIISSISI

अन्योन्य विवाद क्षयेण,
पारस्परिक प्रीति रस्तु ।
विद्वेष तिरो भावनेन,
लोकाः सुखिनः संभवन्तु ॥

३३४ ISIISSISI

चिरं निज साध्यं विचार्य,
कृती स्व कृतिं प्रारभेत ।
विना कृति साध्या गमेन,
न कापि कृतिः सिद्धिमेति ॥

३३५ SIIISSISI

अर्थ युगमेतद् विभाति,
यत्र जन उच्छृङ्खलोऽत्र ।
आचरति योऽर्थागमाय,
गर्हितम कर्मा विचार्य ॥

३३६ IIIISSISI

जगति जनोऽर्थागमाय,
गणयति कार्यं न कर्म ।
रहयति कीर्ति स्तमत्र,
यदि तनुते यो विकर्म ॥

३३७ SSSSISISI

अर्थं प्राप्ति विना जनस्य,
संमानः क्वापि जायते न ।
अर्थं शंसन्ति कीर्तयेऽत्र,
विद्यादीन् सोऽतिवर्तते हि ॥

३३८ ISSSISISI

प्रवादं वापकीर्ति माप्य,
परो गृध्नुः कथं चिदत्र ॥
न तापं मानसे समेति,
प्रशस्तं वेत्ति वित्तमेव ॥

३३९ SISSISISI

राम राज्ये भयं कुतोऽपि,
कस्य चिन्नाभवत् कदापि ।
तादृशं किं भविष्यतीह,
भूय आतङ्क हीन मेव ॥

३४० ।।ऽऽ।ऽ।ऽ।

अनिरुद्ध जनः करोति,
निज कार्यं यथेच्छ मेव ।
सकलं तस्य निघ्न मेव,
सफलं लोक तन्त्र मत्र ।।

३४१ ऽऽ।ऽ।ऽ।ऽ।

स्वं निर्मलं मनो निधेहि,
यावत् तदुज्ज्वलं न मित्र ।
सद् भावना न तावदेति,
आत्मोन्नति स्तया विना न ।।

३४२ ।ऽ।ऽ।ऽ।ऽ।

इन्द्रिय संयमः सदैव,
मनोविकार निग्रहाय ।
प्रयत्न पूर्वकं जनेन,
विधेय आत्मनीन एव ।।

३४३ ऽ।।ऽ।ऽ।ऽ।

सर्वमपीह नाश मेति,
कीर्ति रथाजरामरा च ।
सा पुन राप्यते जनेन,
पुण्य चयेन संचितेन ।।

३४४ ।।।ऽ।ऽ।ऽ।

सुचरितव्य मात्मनीन,
मविरतं नृणां हिताय ।
शुभमभीप्सुना वलेन,
सुकृत मत्र पौरुषेण ।।

३४५ SSSIISISI

धर्मेणात्म हितं जनस्य,
तं रक्षेदसुभि र्धनेन ।
पापे जातु मतिन धेहि,
यत्नं सत्सु संयमेन ॥

३४६ ISSIISISI

सदा जीवन मत्र मित्र,
विगीतं रहितं धनेन ।
समानं ननु जीवनाय,
धनं संचिनु सत्पथेन ॥

३४७ SISIISISI

ग्राहको विरलो गुणस्य,
नादरो गुणिनोऽत एव ।
उच्चटां शवरी बिभर्ति,
मौक्तिकं सहसा जहाति ॥

३४८ IISIISISI

सरला गति रुन्नयनाय,
महिता बुधबोधिता हि ।
अनुयाँश्च तया सदैव,
जन उच्च पदं प्रयाति ॥

३४९ SSII/SISI

मोहो जगति बन्धनाय,
विद्या भवतिमुक्तये च ।
इच्छां यशसि धारयेद् हि,
चिन्तां वपुषि वर्जयेंच्च ॥

३५० ISIIISISI

गृहाण हृदि राम नाम,
बधान करणानि तानि ।
वशी कुरु मनो यमेन,
जहीहि विषयान् क्षणेन ॥

३५१ SIIIISISI

इन्द्रिय विषयान् जहीहि,
संशमय मनः क्षणेन ।
चिन्तय हृदि राम – नाम,
भञ्जय भवबन्ध माशु ॥

३५२ IIIIISISI

अघचय मपाकुरुष्व,
सुकृत तति माचराशु ।
सकल विषयान् विमुञ्च,
मनसि जप राम – नाम ॥

३५३ SSSSSIISI

श्री रामः सीता सहितो हि,
नाथ स्त्रैलोक्यस्य स एव ।
स्रष्टा भर्ता नाशयिता च,
ध्येयो वन्द्यः सन्ततमेव ॥

३५४ ISSSSIISI

त्रिलोकी नाथं हृदि धेहि,
विकारान् सर्वान् विजहीहि ।
स्वभावं सर्वेषु बधान,
भवाब्धेः पारं तरसेह ॥

३५५ SISSSIISI

मोहपाशं स्रंसय धीर,
ज्ञान दीपं प्रज्वलयाशु ।
स्वं मनो योगेन नियम्य,
प्रत्यभिज्ञातुं प्रयतस्व ।।

३५६ IISSSIISI

अपि कृच्छ्रं दुःसह माप्य,
सुजनो धर्मं न जहाति ।
विजयो धर्मात्मन एव,
सह धर्मेणाभ्यवितेन ।।

३५७ SSISSIISI

रामं भजस्व स्व शिवाय,
लोकोखिलः स्वार्थ हिताय ।
अन्यः सहायो नहि कोऽपि,
सर्वात्मना तं प्रतियाहि ।।

३५८ ISISSIISI

विना निजार्थं नहि कोऽपि,
कदापि साहायक मेति ।
गते निजार्थे तु स एव,
न चाभि जानाति पुरेव ।।

३५९ SIISSIISI

कर्मणि साध्ये प्रयतस्व,
यत् तु न साध्यं विजहीहि ।
कर्म तु साध्यं सफलं हि,
कार्य मसाध्यं विफलं च ।।

३६० IIISSIIISI

गुरु कृपातोऽधिगता तु,
भवति विद्या विफला न ।
जगति विद्याधिगमाय,
प्रयतनीयं मनुजेन ॥

३६१ SSSISIIISI

अभ्यासः सदा फलदोऽस्ति,
कर्तव्यो गुणाधिगमाय ।
अभ्यासं विना किमपीह,
साध्यं जातु नैव जनेन ॥

३६२ ISSISIIISI

शरीरं निरामय मत्र,
प्रशस्यं सदा मनुजस्य ।
स रोगो महान् रिपुरस्ति,
विजेयः सदा नियमेन ॥

३६३ SISISIIISI

मानसं सदा चल मस्ति,
संयमेन तद् विजयस्व ।
संयतं मनः स्वशिवाय,
श्रेयसे स्वयं प्रयत व ॥

३६४ IISISIIISI

यश एव जीवित मस्ति,
यशसे सदा प्रयतस्च ।
सु यशो विराजति यस्य,
सततं स जीवति तात ॥

३६५ SS।।S।।S।

राम: सुजनं परिपाति,
ध्येय: सततं नियमेन ।
मोहं त्यज दार सुतेषु,
शीघ्रं भव बन्ध मस्य ।।

३६६ ।S।।S।।S।

तदीय मिदं जगदेव,
न भिन्न मवेहि ततश्च,
अतोऽखिल भेद मपास्य,
समाचर लोक हिताय ।।

३६७ S।।।S।।S।

राम तरणी मुपलभ्य,
पारय भवाब्धि मयेन ।
एष ऋजुमार्ग उदेति,
राम शरणस्य जनस्य ।।

३६८ ।।।।S।।S।

हरि शरणं व्रज तात,
जगति न सार मवेहि ।
न हि सहगामि सुतादि,
जप सततं हरि नाम ।।

३६९ SSSS।।।S।

लोकान् सर्वान् स विदधाति,
सस्नेहं तानवति यश्च ।
जहर्तीदं च समयेन,
नित्यं तं याहि हृदयेन ।।

३७० ISSSIIIISI

सहायं विद्धि हरि नाम,
सहायोऽन्य स्तव न कोऽपि ।
तमेवाजं भज शिवाय,
भवाम्भोधिं तर सुखेन ॥

३७१ SISSIIISI

श्रेयसे योग मुपधेहि,
नित्ययोगात् तमवगच्छ ।
तं विदित्वा तमुपयाहि,
एष पन्था ऋजुरतीव ॥

३७२ IISSIIISI

नित्यं मोह कलितोऽस्मि,
मम बोधं वितर राम ।
भव पाशं शिथिलयाशु,
निजरूपं गमय मापि ।

३७३ SSISIIISI

सत्यं सदा विजयते हि,
मोहान्न तज् जहिहि जातु ।
उच्चैः पदं समभियाति,
सत्यं तु पालयति योऽत्र ॥

३७४ ISISIIISI

सदा सदाशय मुपेहि,
सदाशयो जयति यस्तु ।
दुराशयो भवति योऽत्र,
स भर्त्सनां जगति याति ॥

३७५ SIISIIISI

मङ्गल मूर्ति मुपयाहि,
विघ्नशमं स हि करोति ।
विघ्न हरो जयति सोऽत्र,
संतत वन्दन मुपैति ॥

३७६ IIISIIISI

गणपति जयति सोऽत्र,
नवनिधी नुपददाति ।
अथ समृद्धि मपि राति,
लघु प्रसह्य प्रतिभां च ॥

३७७ SSSIIISI

लोके राजति सदयेन,
चित्तेनात्र स हि सदयेन ।
संमान्यो भवति निजेन,
सत्कार्येण सुविहितेन ॥

३७८ ISSIIIISI

न मृत्यो र्भय मुपगच्छ,
न भीतं त्यजति कदापि ।
अजस्रं हरि चरणं हि,
शुभं ते शरण मिहास्ति ॥

३७९ SISIIISI

वन्दनं गज वदनस्य,
श्रेयसां निधिर तुलोऽस्ति ।
तं सदा मनसि भजामि,
सोऽखिलं वितरतु मेऽत्र ॥

३८० IISIIIISI

प्रथमं करि वदनाय,
महते नवनिधिपाय ।
इह वाञ्छित वरदाय,
शिवदाय मम नमोऽस्तु ॥

३८१ SSIIIIISI

लोकेऽशरण शरणाय,
नित्यं प्रहसित मुखाय ।
भक्ताभिलषितप्रदाय,
भूयः प्रणतिर्तति रस्तु ॥

३८२ ISIIIIISI

अविघ्न कर चरणाय,
महामहिम वरदाय,
सदा सुलभ शरणाय,
नमो गणपरिवृढाय ॥

३८३ SIIIIIISI

भारति भगवति पाहि,
वाञ्छितवर मुपदेहि ।
मातरनुदिन मुपेत्य,
लालय निज सुत मत्र ॥

३८४ IIIIIIISI

अघ निकर मपनीय,
गुण निचय मुपधेहि ।
शरण मह मुपयामि,
जननि सपदि दयस्व ॥

३८५ SSSSSSS।।

आपन्नं पुत्रं मां पालय,
मात र्वात्सल्यं स्वं दर्शय ।
दारिद्र्यान्मां सद्यो मोचय,
दुर्गं संसाराब्धिं पारय ।।

३८६ ।SSSSSS।।

सदा मां पापेभ्यो वारय,
मुदा सत्कार्येष्वायोजय ।
दयाभावं दीनेष्वातनु,
द्रुतं मातः कृच्छ्रादुद्धर ।।

३८७ S।SSSSS।।

जीविते श्रद्धा मुत्सारय,
मात रुच्चाकाङ्क्षां वारय ।
आधिचिन्ताभ्यो मां मोचय,
भोगतृष्णां मे दूरीकुरु ।।

३८८ ।।SSSSS।।

मयि वात्सल्यं भूयस्तनु,
जगदम्ब क्षिप्रं लालय ।
मम चिन्ता व्याधिं नाशय,
सहजां भक्तिं प्रोद्भावय ।।

३८९ SS।SSSS।।

मातर्दयामूर्ते पालय,
सद्यो दयाभावं संतनु ।
आपत्परीतोऽहं संप्रति,
विज्ञाय मां कृच्छ्रादुद्धर ।।

३९० ISISSSSII

यमेन कामक्रोधौजय,
परोपकारं नित्यं तनु ।
मनश्च भोगेभ्यो वारय,
सुखेन संसाराब्धिं तर ॥

३९१ SIISSSSII

मानव ! शान्तिं चेदिच्छसि,
भौतिक कामान् सर्वांस्त्यज ।
आत्मनि नित्यं स्वं चिन्तय,
दुर्जय शत्रुं मोहं जहि ॥

३९२ IIISSSSII

मनसि रागद्वेषौ क्षिणु,
विषय वैराग्यं वर्द्धय ।
सपदि मोहपाशं क्षिप,
हरिपदं स्वं संप्रापय ॥

३९३ SSSISSSII

सद् भावं समेषूद्भावय,
दुर्वृत्तेषु सक्तिं वारय ।
त्वं वित्तेषु तृष्णां नाशय,
श्री रामे मनः स्वं योजय ॥

३९४ ISSISSSII

क्रियामात्मनी नामाचर,
कदा चिन्न गर्वं माप्नुहि ।
सदा लोक-पीडां संत्पज,
स्व भावेन लोकेशं भज ॥

९५ SISISSSII

राम नाम रत्नं धारय,
भौतिकेषु सङ्गंवारय ।
आत्मदीपं नित्यं द्योतय,
मोहपाश बन्धं छेदय ॥

९६ IISISSSII

हरि नाम नित्यं संस्मर,
विषयानशेषान् दूरय ।
सुकृतं सदा संसाधय,
सुजनान् मुदा संमानय ॥

९७ SSIISSSII

भोगेषु वितृष्णां वारय,
रामं निज चित्ते धारय ।
जीवेषु दयां संचारय,
संसार समुद्रं पारय ॥

९८ ISIISSSII

जनान खिलानुद्भावय,
मनो विषयेभ्यो वारय ।
सदा परपीडां संत्यज,
सखे मनसा रामं भज ॥

९९ SIIISSSII

चिन्तय हरिं नित्यं हृदि,
साधु पदवीं संसाधय ।
आत्मनि च तोषं धारय,
दुष्ट जन संसर्गं त्यज ॥

४०० ।।।।ऽऽऽ।।

हृदि परमेशं चिन्तय,
विषय विकारान् संत्यज ।
सुकृत परो नित्यं भव,
भवजलधेः पारं व्रज ।।

४०१ ऽऽऽऽ।ऽऽ।।

आत्मानं द्रष्टुकामो यदि
चाञ्चल्यं चेतसः संत्यज ।
प्राणायामेन तच्छोधय,
योगारूढः सदा शीलय ।।

४०२ ।ऽऽऽ।ऽऽ।।

निजं चित्तं वशे धारय,
सदाभ्यासेन तद् यन्त्रय ।
वशीकाराय योगं तनु,
स योग श्चित्तरोधाय हि ।।

४०३ ऽ।ऽऽ।ऽऽ।।

सत्यवादी सदा राजति,
लोक यात्रात्र सत्येन हि ।
सत्य मेवास्ति धर्मो भुवि,
पालनीयं तदापद्यपि ।।

४०४ ।।ऽऽ।ऽऽ।।

परमेशः सदा रक्षति,
सततं चिन्तनीयो हृदि ।
सकलं तस्य निघ्नं भुवि,
शरणं याहि तं मानव ।।

४०५ SSISISSII

सर्वेषु साम्यमुद्भावय,
दीनेषु कारुण्यं संतनु ।
बद्धं च बन्धनान्मोचय,
पुण्यानि कीर्तये संचिनु ॥

४०६ ISISISSII

धियं जनाय शुद्धा मति,
प्रसद्य शारदा यच्छति ।
अहो धिया न साध्यं किमु,
जनः सुधीश्चिरं नन्दति ॥

४०७ SIISISSII

मां परिपाहि लोकाधिप,
त्वां शरणं प्रपन्नः शिव ।
आशु प्रसीद गङ्गाधर,
नाशय जन्मबन्धं मम ॥

४०८ IIISISSII

जननि मां निजाङ्कं नय,
द्रुतमुपेत्य संलालय ।
तनयवत्सले पालय,
भवभयाच्च निर्मोचय ॥

४०९ SSSIISSII

आधि व्याधि परीतो हर,
शम्भो मां कृपया पालय ।
आपद् ग्रस्त इहाहं भव,
कृच्छ्राद्दुद्धर गङ्गाधर ॥

४१० ISSIISSII

पुरारे दुरितं मे हर,
क्षमस्वाखिल मागो मम ।
उपेतः शरणं त्वामिह,
प्रतीतोऽसि शरण्यो भव ॥

४११ SISIISSII

आशुतोष विभो लोकप,
यच्छ मे शरणं शंकर ।
आपदो मम दूरी कुरु,
मां विलोक्य विशोकं कुरु ॥

४१२ IISIISSII

दुरितं त्वरितं नाशय,
भव सागर मुल्तङ्घय ।
पदवीं कृपया बोधय,
मम संहर मोहं हर ॥

४१३ SSIIISSII

शम्भो सपदि बोधं कुरु,
मोहं च मनसो नाशय ।
पापानि प्रसभं वारय,
ज्ञानं वितर मृत्युञ्जय ॥

४१४ ISIIISSII

त्रिलोचन दयालो शिव,
सु बुद्धि ममम्मां प्रापय ।
सदा सुकृतये योजय,
प्रसीद निजरूपं नय ॥

४१५ SIIIISSII

दिग् वसन विभो शंकर,
मन्मथ हर पापं हर ।
जन्म मरणबन्धं क्षिणु,
आत्मनि निजभक्तिं तनु ॥

४१६ IIIIISSII

त्रिभुवन पते शंकर,
सपदि मम रागं हर ।
मनसि शम मुद्बोधय,
भवजलधि मुत्तारय ॥

४१७ SSSSSISII

गावोऽस्माकं मातरो ननु,
तासां रक्षार्थं प्रयस्यत ।
प्रीतास्ताः कामान् प्रसूय हि,
रक्षन्त्यस्मान् पालिता इह ॥

४१८ ISSSSISII

परिश्रान्तोऽहं चिरान्ननु,
जगन्मातर्मां विलोकय ।
समादायाङ्कं च सान्त्वय,
विपज्जालं मे निवारय ॥

४१९ SIIISSSII

जन्म बन्धान्मात रुद्धर,
मानसाञ्छत्रून् विनाशय ।
नाम रूपे स्वे विलापय,
शाश्वतीं शान्तिं प्रदेहि च ॥

४२० ।।ऽऽऽ।ऽ।।

जगदम्ब त्वं दयां सृज,
मनसः कामान् निवारय ।
तरसा मोहं विनाशय,
भव बन्धान्मां विमोचय ।।

४२१ ऽऽ।ऽऽ।ऽ।।

कामादि दोषांल्लयं नय,
पापानि सर्वाणि नाशय ।
कीर्तिं सुबुद्धिं प्रसारय,
संसार सिन्धुं च पारय ।।

४२२ ।ऽ।ऽऽ।ऽ।।

विपन्निमग्नं त्रिलोचन,
दयानिधे मां समुद्धर ।
अशेष दोषान् विदूरय,
समीहितानि प्रपूरय ।।

४२३ ऽ।।ऽऽ।ऽ।।

इन्द्रिय सौख्यं निवर्तय,
राम पदाब्जे रतिं कुरु, ।
मानव ! तन्नाम संस्मर,
मृत्यु मुखात् स्वं विमोचय ।।

४२४ ।।।ऽऽ।ऽ।।

मनसि रामं विचिन्तय,
जगति पुण्यं समर्जय ।
सपदि पापानि संत्यज,
भवसमुद्रं च पारय ।।

४२५ SSSISISII

राम चिन्तय सदा हृदि,
पुण्यं यत्नतः समाचर ।
पापं चेतसो निवारय,
द्वेषं प्राणिषु विवर्जय ॥

४२६ ISSISISII

ममाधिं प्रभो विनाशय,
विशोकं मनः समाधेहि ।
अजस्रं रतिं चिदात्मनि,
प्रदायाभवं समादिश ॥

४२७ SISISISII

श्रेयसे सुकर्म संचिनु,
राम नाम मानसे जप ।
पीडिते सदा दयां कुरु,
जीवितं सुखेन यापय ॥

४२८ IISISISII

मनसा हरिं सदास्मर,
सुकृतं हिताय संतनु ।
दुरितं यमेन संत्यज,
भव सिन्धुमेत मुत्तर ॥

४२९ SSIISISII

रामं हृदयेन चिन्तय,
नित्यं सुकृतं समाचर ।
दीनेषु दयां प्रसारय,
संसार समुद्र मुत्तर ॥

४३० ।ऽ।।ऽ।ऽ।।

सदा स्व हिताय वर्तय,
तथा सुकृतं समर्जय ।
हितं हरि चिन्तनं तव,
सुकर्म चिरं सुखाय च ॥

४३१ ऽ।।।ऽ।ऽ।।

सोपधि कृतं हिताय न,
धर्मं रहितं हितं नहि ।
धर्म निरपेक्ष ओखति,
छद्म रहितं हितं तव ॥

४३२ ।।।।ऽ।ऽ।।

हरि मिह धेहि चेतसि,
स हि शरणं विराजति ।
जगति हिताय कोऽपि न,
सततं शिवाय तं भज ॥

४३३ ऽऽऽऽ।।ऽ।।

अध्यात्मं चेतय चेतय,
दृश्यं सर्वं क्षणिकं त्यज ।
कान्तं गात्रं सहयायि न,
वित्तं पुत्राद्यपि ते किमु ॥

४३४ ।ऽऽऽ।।ऽ।।

शिवं वन्दस्व शिवाय हि,
स प्रीतः किं न हि यच्छति ।
महेशं तं शरणं व्रज,
सदा भवतं स च रक्षति ॥

४३५ SISSIISII

शंकरं लोकहितं भज,
भूति मृद्धिं च स यच्छति ।
त्रायते भक्त जनं स हि,
तस्य भक्तो न विषीदति ॥

४३६ IISSIISII

जगदम्बा परिरक्षति,
निज भक्तं जन मापदि ।
मनसा तां शरणं व्रज,
तव भद्रं भविष्यति ॥

४३७ SSISIISII

विद्वाँस्तथाद्रियते न हि,
मुण्डी यथाद्रियते किल ।
आडम्बरो महितो भुवि,
गृह्या गुणस्य न केचन ॥

४३८ ISISIISII

सदा परोपकृतिं तनु,
प्रपीडनं च परित्यज ।
मनो नियम्य हरिं भज,
सुखेन संसृति मुत्तर ॥

४३९ SIISIISII

साम्ब शिवं भज मानव,
तं तु सदा सदयं स्मर ।
आशु प्रसद्य जनेषु हि,
वाञ्छित मत्र स यच्छति ॥

४४० ।।।ऽ।।ऽ।।

अभयदे कुशलं तनु,
मयि प्रसीद सुरेश्वरि ।
शरणदे शरणं भव,
सतत दुर्गंत मेधय ।।

४४१ ऽऽऽ।।।ऽ।।

मातर्मा सपदि पालय,
संतप्नो ह्मनिशं सुरि ।
[illegible] मम निवारय,
शान्तिं मे मनसि रोपय ।।

४४२ ।ऽऽ।।।ऽ।।

अघं मे हर महेश्वर,
मर्माधि शिव विनाशय ।
स्वरूपं सपदि दर्शय,
भवाब्धे र्भव समुद्धर ।।

४४३ ऽ।ऽ।।।ऽ।।

राम नाम मणि माभर,
पुण्य कार्य मनिशं चर ।
दीनजने करुणां कुरु,
जन्म बन्ध मपसारय, ।।

४४४ ।।ऽ।।।ऽ।।

सुमतिं मनसि धारय,
चरितं विशद माचर ।
अनृतं सपदि संत्यज,
हृदयात् कपट मुत्सृज ।।

४४५ SSIIIISII

गङ्गे तव सलिलं मधु,
भद्राय जगति दीव्यति ।
तापं हरति महेश्वरि,
रोगेभ्यः सपदि रक्षति ॥

४४६ ISIIIISII

सदा सुरधुनि पालय,
शिवाय सलिल मेजय ।
अघानि सपदि नाशय,
मुदं जगति प्रसारय ॥

४४७ SIIIIISII

रामपदकमलं भज,
मानस विकृति मुत्क्षिप ।
मोह तिमिर मपाकुरु,
जन्म मरण भयं त्यज ॥

४४८ IIIIIISII

मनुज मनसि चेतय,
शिव पद कमलं स्मर ।
सुत धन ममतां जहि,
निजपरगणनां त्यज ॥

४४९ SSSSSSIII

मोहध्वान्तं हातुं सपदि,
चेतः शत्रून् जेतुं जगति ।
उच्चैः स्थानं प्राप्तुं महसि,
श्रीरामं वन्देऽहं मनसि ॥

४५० ISSSSSIII

मनोरागं सद्यो जहिहि,
सतां सङ्‌गं ज्ञानाय कुरु ।
स्व-भोगेष्वासक्तिं विसृज,
विशोको निर्द्वन्द्वो विहर ।।

४५१ SISSSSIII

आत्मनोनं कर्माचरत,
सततं श्रीरामं स्मरत ।
प्राणि मात्रे साम्यं कुरुत,
जन्म बन्धान् मुक्ता भवत ।।

४५२ IISSSSIII

सततं सत्सङ्गं कुरुत,
सहसा दुःसङ्गं त्यजत ।
मनसात्मानं शोधयत,
जगदम्भोधिं संतरत ।।

४५३ SSISSSIII

ज्ञानाय सत्सङ्‌गं कुरुत,
ज्ञानेन मोहं संत्यजत ।
मोहेन बन्धः संभवति,
यत्नेन बन्धं वारयत ।।

४५४ ISISSSIII

यमेन योगं साधयत,
मनोवशीकारं तनुत ।
विमुक्तये यत्नं कुरुत,
सदा हरिध्यानं धरत ।।

४५५ SIISSSIII

साम्बशिवो मां पालयतु,
दुश्चरितेभ्यो वारयतु ।
आत्मनि भक्तिं वर्धयतु,
दुःख भवाब्धिं तारयतु ॥

४५६ IIISSSIII

जयतु गौरीनाथ शिव,
हरतु मे चिन्तां सपदि ।
दिशतु चाभीष्टं वरद,
नयतु मां स्वं दिग्वसन ॥

४५७ SSSISSIII

लोकोऽयं विमूढो भ्रमति,
किंचिन्नास्ति सत्यं जगति ।
ब्रह्मैवेति तत्त्वं कलय,
विज्ञातुं तदन्त र्विमृश ॥

४५८ ISSISSIII

मनो निग्रहश्चेद् भवति,
स्वमाप्तुं स्ववश्यं कलय ।
तदाप्तुं प्रयत्नं प्रतनु,
सुपन्था अयं संभवति ॥

४५९ SISISSIII

आत्म दर्शनं श्रेय इह,
तद् विमुक्तये संभवति ।
श्रेयसे प्रयत्नं कलय,
शीलनेऽखिलं सिध्यति हि ॥

४६० ।।ऽ।ऽऽ।।।

हरिनाम जप्यं मनसि,
सततं हितं ते जगति ।
अवधेहि चित्ते सपदि,
विलयं व्रज तन्महसि ।।

४६१ ऽऽ।।ऽऽ।।।

रामं भज नित्यं मनसि,
नान्यः शरणं ते जगति ।
दृश्यं ननु मिथ्या कलय,
सर्वं त्यज बुद्ध्वा सपदि ।।

४६२ ।ऽ।।ऽऽ।।।

इदं न निजं ते किमपि,
परित्यज पापं सपदि ।।
सदा स्मर रामं मनसि,
लभस्व सुकीर्तिं जगति ।।

४६३ ऽ।।।ऽऽ ।।

मोहमयनिद्रां जहिहि,
चेतसि च बोधं कलय ।
राम चरणं धेहि हृदि,
पारय भवाब्धिं सपदि,

४६४ ।।।।ऽऽ।।।

निज हृदि मोहं रहय,
परिहर सर्वं जगति ।
निरुपधि लोके विहर,
व्रज भवपारं सपदि ।।

४६५ SSSSISIII

पुण्यं कार्यं सदा तनुत,
पापं बुद्धया न चाचरत ।
श्रेयो नित्यं विचिन्तयत,
रामं चित्ते सदा स्मरत ॥

४६६ ISSSISIII

सदा तत्त्वं विचारयत,
मृषावादं निराकुरुत ।
असारं सर्व माकलयत,
हरिं चित्ते च धारयत ॥

४६७ SISSISIII

आत्मबोधाय चिन्तयत,
धेहि नित्यं हरिं मनसि ।
मनः संयम्य धारयत,
संयतं मुक्तये भवति ॥

४६८ IISSISIII

विषयेभ्यो मनो यमय,
सततं तद् हरौ रमय ।
तदभेदं स्वयं कलय
भवपारं निजं गमय ॥

४६९ SSISISIII

वागीश्वरीं स्मरामि हृदि,
प्रीता हिताय सा भवति ।
प्रज्ञां ददातु मे सपदि,
मोहं क्षणेन संहरतु ॥

४७० ISISISIII

नमामि शारदां मनसि,
प्रसद्य सा मतिं दिशतु ।
हिताय सर्वदा भवतु,
मनोरथं च पूरयतु ॥

४७१ SIISISIII

चिन्तय शारदां मनसि,
सा विमलां मतिं दिशति ।
मोहतमो विनाशयति,
दुश्चरितान् निवारयति ॥

४७२ IIISISIII

मनसि राम नाम जप,
त्यज च दुष्कृतं सपदि ।
जन हिताय कर्म कुरु,
भवनदं सुखेन तर ॥

४७३ SSSIISIII

दुर्गे देवि प्रसीद मयि,
संतापं हर मे सपदि ।
आगो मर्षय मे जननि,
बालोऽहं विमुखो भवति ! ॥

४७४ ISSIISIII

प्रसादं जगदम्ब कुरु,
प्रकाशं तनु चेतसि च ।
अभीष्टं वरदे प्रदिश,
विषादं हर मे सपदि ॥

४७५ ऽ।ऽ।।ऽ।।।

अम्बिका शरणं जगति,
सा हिताय सदा भवति ।
ईप्सितानि मुदा दिशति,
दुष्कृताच्च निवारयति ॥

४७६ ।।ऽ।।ऽ।।।

जगदम्ब प्रसीद मयि,
वरदे वरदाशु भव ।
दुरितं दययापहर,
सुकृते मति मातनु च ॥

४७७ ऽऽ।।।ऽ।।।

रामं स्मर सदा मनसि,
स एव जगदुद्धरति ।
भक्ताय शिवदो भवति,
लोकस्य विपदो हरति ॥

४७८ ।ऽ।।।ऽ।।।

सरस्वति प्रसीद मयि,
मतिं सपदि मे प्रदिश ।
मनश्च विशदं वितनु,
रुचिं यशसि मे वितर ॥

४७९ ऽ।।।।ऽ।।।

भारति सुमतिं वितर,
वारय तिमिरं सपदि ।
प्रौढ़ि मतितमां प्रदिश,
उन्नत पद मारचय ॥

४८० IIIIISIII

यशसि रुचि मुन्नमय,
विपदि धृति मेव धर ।
मनसि समतां वितनु,
जगति ममतां विसृज ॥

४८१ SSSSSIIII

श्री रामो लोकेषु जयति,
ध्येयः सर्वैः संतत मिह ।
स त्रैलोक्यस्य प्रभवति,
भुक्तिं मुक्तिं च प्रदिशति ॥

४८२ ISSSSIIII

ससीतो रामस्त्रिजगति,
विधाता हर्ता स जयति ।
स मर्यादां पालयति हि,
समाराध्यः संतत मिह ॥

४८३ SISSSIIII

देवि दृष्टिं देहि सपदि,
त्वामहं प्राप्तोऽस्मि जननि ।
रक्ष मातर्मां भगवति,
मृत्युभीतिं मे प्रशमय ॥

४८४ IISSSIIII

स समाराध्यो हरिरिह,
यशसे भावं धर हृदि ।
त्यज चिन्तां स्वे वपुषि च,
सुकृतं चिन्त्यं जगति हि ॥

४८५ SSISSIIII

मोक्षाय रामं भज हृदि,
चेष्टस्व साध्ये जगति च ।
कामान शेषानपि जहिहि,
दुःखं भवाब्धिं तर लघु ॥

४८६ ISISSIIII

अशेष कामान् परिहर,
सदैव रामं स्मर हृदि ।
दयां च दीनेषु वितनु,
यमेन रागं प्रशमय ॥

४८७ SIISSIIII

धारय चित्तं हरि मभि,
साधय पुण्यं जगति च ।
अर्जय कीर्ति सपदि हि,
मानस शत्रून् प्रशमय ॥

४८८ IIISSIIII

जगति कीर्तिं परिचिनु,
सपदि पापं व्यपनय ।
इह हरिं धेहि मनसि,
सकल कामान् परिहर ॥

४८९ SSSISIIII

रामं सीतया सह भज,
भोगेभ्यो मनो नियमय ।
सत्कार्यं विधेहि जगति,
स्वां कीर्तिं प्रसारय भुवि ॥

४९० ISSISIIII

शिवं शान्तये परिचर,
दुराशां द्रुतं परिहर ।
रिपून् मानसान् प्रशमय,
मनो मुक्तये नियमय ॥

४९१ SISISIIII

आधि माशु मे प्रशमय,
पाप कर्मणो विरमय ।
आत्म भावनां निगमय,
पाहि पाहि मां त्रिनयन ॥

४९२ IISISIIII

अनिशं शिवं स्मर हृदि,
शरणं प्रयाहि सपदि ।
जगतां शिवं स दिशति,
भव बन्धनं रहयति ॥

४९३ SSIISIIII

भक्तिं परमा मधिहरि,
मुक्त्यै तनु मूढ सपदि ।
निःसार मवेहि मनसि,
दृश्यं निखिलं हि जगति ॥

४९४ ISIISIIII

गतिं सरला मनुसर,
हिताय यतस्व सपदि ।
सदा ह्यशुभं परिहर,
शमेन मनो नियमय ॥

४९५ SIIISIIII

साधु पदवी मनुचर,
ज्ञानमहिता नुपसर ।
कार्य मशुभं परिहर,
वृद्ध सुजना नुपचर ॥

४९६ IIIISIIII

यशसि रुचिं कलयत,
तनुत शुभं जगति च ।
सपदि मनः शमयत,
निखिल हितं गणयत ॥

४९७ SSSSIIIII

इष्टं दद्याः करिवदन,
विघ्नान् हेरम्ब परिहर ।
दिश्याः सिद्धिं मम सपदि,
ज्योति र्लम्बोदर गमय ॥

४९८ ISSSIIIII

ममाधिं शङ्कर शमय,
सदा श्रेयो वितर हर ।
भव बन्धं प्रशिथिलय,
स्वरूपं मां गमय शिव ॥

४९९ SISSIIIII

संकटं वारय सपदि,
देहि शान्तिं मम मनसि ।
वाञ्छितं यच्छ गजमुख,
मां प्रभो मोदय जगति ॥

५०० IISSIIIII

गुण वृद्धिं प्रदिश शिव,
मम दोषान् सपदि हर ।
शुभ दृष्टिं वितर मयि,
कृपया मामव जगति ॥

५०१ SSISIIIII

त्रायस्व मां पुरमथन,
शान्तिं प्रदेहि हर मम ।
पापानि मेऽपनय भव,
सत्यं शिवं गमय शिव ॥

५०२ ISISIIIII

शिवं प्रभो प्रदिश मम,
मनोरथं वितर शिव ।
अघं क्षिणु त्रिपुरहर,
भवाद् भयं शमय च ॥

५०३ SIISIIIII

लोक हितं जगति तनु,
मोहमतिं च परिहर ।
कर्म शुभं सपदि कुरु,
जन्म सुखेन सफलय ॥

५०४ IIISIIIII

सपदि पाप मपनय,
जन हिताय परिचर ।
सतत मात्मनि विहर,
मनसि गर्व मपहर ॥

५०५ SSSIIIIII

आत्मानं दृश मुपनय
मोहं मे ह्यपहर हर ।
शान्तिं मेऽघहर वितर,
कल्याणं स्मरहर कुरु ॥

५०६ ISSIIIIII

सदा मामव पुरहर,
विशोकं कुरु शशिधर ।
अघानि प्रशमय मृड,
स्वरूपं गमय सपदि ॥

५०७ SISIIIIII

पाहि पाहि शिव शिवद,
मानसं शम मुपनय ।
जन्म बन्धन मपहर,
भालेन्दो मृडय मृडय ॥

५०८ IISIIIIII

सुमतिं मनसि वितनु,
स्वहितं सपदि विचिनु ।
मनसा शिव मुपचर,
स्वजनिं फलय जगति ॥

५०९ SIIIIIIII

मात दुंरित मपहर,
सद्यः सुमति मुपनय ।
लोकस्य हित मुपदिश,
श्रेयोऽतनु वितर मम ॥

५१० ISIIIIII

प्रभोऽ[illegible]रण　सुशरण,
दयां　मयि　बहु　वितर,　।
क्षमस्व　दुरित　मतनु,
शिवाय　मम　भव　भव　॥

५११ SIIIIIII

देहि　मति　मति　सुमुख,
विघ्ननिकर　मपनय　।
साधय　गणपरिवृढ,
मोद　भर　मथ　प्रदिश　॥

५१२ IIIIIIII

अघनिकर　मपनय,
मुद　मुपजनय　हृदि　।
प्रथय　मम　कृति　मथ,
दिश　वरमपि　वरद　॥



# प्रणेतृ प्रणीत ग्रन्थाः

१– नेहरूदयम् (खण्ड काव्यम्)

'नेहरू' परिवारस्य उद्भव–विकास–स्वतन्त्रतान्दोलन नेतृत्वद्यारभ्यं श्रीमत्या इन्दिरा गान्धि महोदयायाः प्रधानमन्त्रित्व कालावधि प्रामाणिकं चित्रणम् ।

२– छन्दो वैभवम् (प्रथम सोपानम्)

एकाक्षर पादवृत्ता दारभ्य अष्टाक्षर पादवृत्तं यावत् समेषां संभवि समवृत्त भेदानां स्वरूपोदाहरण निरूपणम् ।

३– छन्दो वैभवम् (द्वितीय सोपानम्)

नवाक्षर पादवृत्तस्य समेषां संभविनां समवृत्तदाभेदानां स्वरूपोदाहरण निरूपणम् ।

